# ॐ प्रकाशकीय ॐ

आजसे तीन साल पहले वि. सं. २०३८ साल में इडरशहर के (इलादुर्गतीर्थ) चातुर्मासमें पू. कर्नाटक केसरि आचार्यदेव श्रीमद्विजय भद्रंकरसूरीश्वरजी महाराज को कितने हस्तलिखित अलग-अलग पन्नेका बंडल पू. शान्तमूर्ति पंन्यासप्रवर श्री पद्मविजयजी गणिवरनें दीया था।

उस सब पन्नेका संशोधन करने से इसमें श्री मौनएकादशी और श्री ज्ञानपंचमी गुणमयती कथा पू. अप्रसिद्ध मुनिवर की प्राप्त हुई। संस्कृत के प्राथमिक अभ्यासी को दोनो कथा उपयोगी बनेगी, अतः प्रकाशित करने की भावना हुई।

इस मौनएकादशी कथामें श्री सुव्रतश्रेष्ठीको की कथा नहिं होनेसे प्रवचन में कथा उपयोगी होनेसे उपदेशप्रासादग्रंथमें से सुव्रतश्रेष्ठीकी कथा साथमें प्रस्तुत की है।

उस दो पर्वचरित्र के साथ पूज्यपाद व्या.वा. संस्कृत आदि भाषाके अनेक ग्रंथ निर्माता आचार्यभगवान श्रीमद्विजय लब्धिसूरीश्वरजी महाराज कृत श्री मेरुत्रयोदशीपर्वकथा जो अलभ्य थी, उसकी मांग ज्यादा होनेसे पुनः प्रकाशित करनेका हमे सुअवसर प्राप्त हुआ।

पू. संस्कृतविशारद आचार्यदेव श्रीमद्विजय भद्रंकरसूरीश्वरजी महाराजने अति परिश्रम लेकर तीनो पर्वचरित्र का संपादन किया है। प्रुफसंशोधन आदि में पू. उपाध्यायजी पुण्यविजयजी



प्रकाशकीय

गणिवर पू. पंन्यासजी वीरसेनविजयजी गणिवर एवं पू. मुनिवर्य विक्रमसेनविजयजी महाराज आदि सबको नतमस्तके वन्दना करते है ।

वाचक ! उन चरित्रोका पठन-पाठन करके तपो धर्ममें प्रगति कर अणाहारीपद-मुक्तिको समीप लावे । जिससे संपादकका, प्रकाशक संस्था का श्रम कृतार्थ हुए । प्रकाशनमें ज्ञानोदय प्रेसके मेनेजर शंकरदासजी ने तथा उनके स्टाफने सहयोग अच्छा दीया ।

प्रकाशक–

प्रकाशक एव प्राप्तिस्थान

श्री भुवन-भद्रंकर साहित्य प्रचार केन्द्र
C/o V. V. VORA
34, Krisnappa Nalken St.
MADRAS (600079)

श्री लब्धि भुवन जैन साहित्य सदन
C/o नटवरलाल चुनिलाल शाह
कपडे की दुकान
पो.–छाणी (391740) जि.–वडोदरा

उक्तस्थल पर ५० न. पै. की स्टाप भेजने से प्रत भेट मिलेगी ।

वीर सं. २५११
वि. सं. २०४१
लब्धि सं० २४
मूल्य–पठनपाठन

मुद्रक—
ज्ञानोदय प्रिन्टिंग प्रेस, पिंडवाड़ा (राज.)

प्रकाशकीय

॥ श्री शखेश्वरपार्श्वनाथाय नमः ॥

॥ आत्मकमललब्धि-भुवनतिलक-भद्रंकरसूरि गुरुभ्यो नमः ॥

पू. प्राचीनमहर्षिकृत गद्यबद्ध टीकया समलंकृता

पू. आचार्य श्री भद्रंकरसूरीश्वरजी महाराज संपादिता

# श्री ज्ञान पंचमी पर्व कथा

ज्ञानं सारं सर्व संसार मध्ये । ज्ञानं तत्त्वं सर्व तत्त्वेषु नित्य ॥
ज्ञान मोक्षमार्गप्रदर्शी, तस्मात् ज्ञाने पंचमी वो विधेया॥ १ ॥

तथाहि-जंबूद्वीपभरतक्षेत्रे पद्मपुरं नाम नगरं, शूरवीरव्यतिक्रान्तजितसेनराजा सर्वलक्षणसंपूर्णा यशोमती नाम राज्ञी, तयोः पुत्रो वरदत्तो नाम कुमारः सद्वासप्ततिकलापारीणतायां रूपलावण्यकलितः अष्टवार्षिको बभूव । पित्रा पंडितस्य समर्पितः पंडितः सादरं पाठयति परं अक्षरमुखे न चटति । पठनविषये का वार्ता ? क्रमेण यौवनं प्राप्तस् तदा वरदत्तशरीरे रोगाः समुत्पन्नाः । अष्टादशरोगैः शरीरं व्याप्तं । राजा-राज्ञी-प्रमुखसर्वोऽपि जनो जिनधर्मवासितचित्तो वर्त्तते । इतस्तस्मिन्नगरे श्री सिंहदासश्रेष्ठी वसति तस्य

पत्नी कर्पूरतिलका नाम । जिनधर्मपरायणयोस् तयोःपुत्री गुणमंजरी लाल्यमाना यौवनं प्राप्ता । पूर्वकर्मवशात् गुणमंजरी शरीररोगातंकबहुलत्वं आप्ता, वचने मूकत्वं बभूव । गृहसप्तकोटिद्रव्यस्वामिसिंहदासश्रेष्ठिना बहूनां व्यवहारिणां निवेदितं, भवतां पुत्राणां पुत्रीं दद्मि, विवाहसंबंधः क्रियते । ते कथयन्ति भवत्पुत्री रोगेण पीडितां कः कुष्ठव्याप्तां परिणयति ? श्रेष्ठिना बहुवैद्यानाम् दर्शिता परं रोगोपशान्तिर्न जाता । मातृपितृप्रमुखसर्वोपि परिवारो दुःखितस् तिष्ठति । क्रमेण कन्या दुष्टकुष्ठाभिभूता जाता, षोडशवर्षमाना बभूव ।

एकदा तत्र नगरे श्री विजयसेनाचार्यश्चतुर्ज्ञानपरिकलितः समागतः, सर्वे जनाः सूरिवन्दनार्थं गताः । सिंहदासश्रेष्ठी सपरिवारो गुरुवन्दनार्थं गतः, वन्दित्वा उपविष्टः । राजापि सपरिवारः पुत्रसहितो गुरूंश्च वन्दतेस्म, गुरुभिः देशना दत्ता । भो भो भव्या ! ज्ञानं सारं हि विश्वे तस्माद्भक्तिं ज्ञानसारेषु कुरुत । यस्मात् देवं धर्मं साधूंश्च नत्वा यान्ति पापानि ज्ञानभक्तितो नित्यं । ज्ञानेन विना जीवाजीवादितत्त्वं न जानन्ति । अतः कारणात् प्रथमं ज्ञानाराधनं, येन ज्ञाने विराधनं क्रियते मनसा वचसा कायेन । तदा मनसा विराधिते मनः शून्यत्वं जायते । वचनेन विराधनेन मूकत्वं मुखरोगा भवंति । कायेन यद् विराधनेन सितकुष्ठादिरोगाः शरीरे समुत्पद्यंते । त्रिभिर्मनवचनकाययोगैर्विराधनया धनधान्यादिपुत्रकलत्रादिशरीरसंतापादिकानि दुःखानि प्राप्यन्ते ।

अस्मिन्नवसरे सिंहदासश्रेष्ठिनाप्युक्तं । भगवन् अहं पृच्छामि, मम पुत्र्या गुणमंजर्या रोगाः शरीरे केन कारणेन समागताः । गुरु र्वक्ति, पूर्वभवःश्रूयतां—घातकीखण्डमध्ये पूर्वदिशि भरते खेटकनगरे जिनदेव-श्रेष्ठी वसति, तस्य भार्या सुन्दरी, तयोः पञ्चपुत्रा आसपाल १ तेजपाल २ गुणपाल ३ धर्मपाल ४ धर्मसार ५, चतस्रः पुत्र्यःलीलावति १ सिलावति २ रंगावति ३ मंगावति ४ जिनदेवश्रेष्ठिपुत्राः पंडितस्य पठनार्थं दत्ताः । ते पञ्चाऽपि उन्मत्ताः, पंडितः पठनशिक्षां ददाति । ते रुदन्ति । मातुः समीपे गच्छंति । माता कथयति पठनेन किं प्रयोजनं, माता पंडितस्य आक्रोशं ददाति । पट्टीका पुस्तिका अग्नि-मध्ये क्षिप्ता ज्वालिता । पुत्राणां कथयति पठनार्थं मा गच्छत, क्रीडामेव कर्तुं । जिनदेवश्रेष्ठिनः किंकरा इव पुत्रा पुत्र्योऽपि न वचनं कुर्वन्ति । श्रेष्ठी कथयति हे प्रिये ! पुत्राणां मूर्खत्वे कोपि कन्यां न ददाति । मूर्ख-शूरमोक्षाभिलाषिणां त्रिगुणाधिकवर्षाणां विषये कन्या न दीयते । श्रेष्ठिना भार्या कथिता, भद्रे ! कन्या न दीयते । मूर्खदोषेण पाणिग्रहणायोग्या । तव दोषेण मूर्खा जाताः । स्त्री भणति । मम दोषः किमपि नास्ति । तवैव दोष एव, विवाद एव जातः । मम सन्मुखं वदसे ? सा सुन्दरी सन्मुखं वदसि । तव पिता पापिष्ठः, येन त्वं एवं वदसि । एतद्वचनं श्रुत्वा क्रोधेन जिनदेव श्रेष्ठिनोपलो मुक्तः तस्याश्शीर्षे लग्नः । सा मृत्वा तव स्त्रिय उदरे उत्पन्ना पुत्री जाता । पूर्वभवज्ञानविराधनायां रोगोत्पत्ति र्जाता । सा गुरूणां वचनं श्रुत्वा गुणमंजर्या जातिस्मरणमुत्पन्नं । दृष्टः पूर्वभवः, सर्वं सत्यं ज्ञातं । पुनः श्रेष्ठिना मुनिः पृष्टः ।

एते रोगाः कथं विलयन्ति । गुरुणा भणितं । ज्ञान एव सारः ततः—

ज्ञानपंचमीं विधिना कुरु । सा तु विधितपपुस्तकतो ज्ञेया । पंचवर्षाणि पंचमासान् एव तपविधानं यदि पंचमीतपः कर्त्तुमशक्तः । तदा कार्त्तिकमासे शुद्धपंचमी यावज्जीवं समाराध्या । वर्षं प्रति एकपञ्चमी क्रियते । तदा रोगोपशान्ति भवति । सौभाग्यलावण्यरूपादिगुणाः प्रथंते । सौभाग्यपञ्चमी नाम सर्वऋद्धि परिपूरितो भवति । जीवपुत्रपुत्र्यादिपरिकरः, ज्ञानादिपंचबुद्धिबहुलो भवति । इति गुरुवचनं श्रुत्वा जिनदेवश्रेष्ठी वदति, भगवन् विधिः कथ्यतां मम पुत्र्या अन्यतपःशक्तिर्नास्ति । कार्त्तिकपञ्चमी यावज्जीवं करिष्यति विधिं कथयति सूरि र्वः । पंचम्यादिदिने स्वयंपट्टकं मण्डयित्वा पंचपुस्तिका मुक्ताः । पुष्पैः पूजयित्वा धूपक्षेपपंचवर्णधान्यान्युपढौक्यानि । पञ्चसंख्यैःपंचप्रकारैः पक्वान्नानि । पंचप्रकारैः पंचफलानि पंचद्रव्याणां ढौक्यन्ते । पश्चाद् गुरोरग्रे प्रत्याख्यानं क्रियते । तस्मिन् दिने 'नमो नाणस्स' एक सहस्रं वा अष्टोत्तरशतं गुण्यते । यदा पंचमी दिने पौषधो भवति । तदा पारणे सर्वं ढौकितानां पारणं क्रियते । साधुः प्रतिलाभितः विधिं एवं श्रुत्वा गुणमंजरीजीवेन प्रतिपन्नं ! तस्मिन् समये राज्ञा पृष्टं मम पुत्रस्य वरदत्तस्य यौवनसमये व्याधिः समुत्पन्नः । पाठोपि नागच्छति कस्य कर्मणो विपाको ? गुरुणा कथितं । हे महाभाग ! शृणु पुत्रस्य पूर्वभवं । तथाहि—जंबूद्वीपे भरतक्षेत्रे श्रीपुरं नाम नगरं वसुनामा श्रेष्ठी भार्या वसुमती, तयोः पुत्रो वसुसारो लघु पुत्रो वसुदेवस्तौ द्वौ एकदा वने क्रीडार्थं गतौ च मुनिसुन्दरसूरिणा

प्रतिवुद्ध्येते । यत्प्रातस्तन्न मध्याह्ने यन्मध्याह्ने तन्न निशि, निरीक्ष्यते भवेऽस्मिन् हि पदार्थानामनित्यता ? इति वचनं श्रुत्वा वैराग्यवासित्वेन द्वाभ्यां चारित्रं गृहीतं । लघुभ्राता वसुदेवः श्री सिद्धांतसमुद्रमवगाहूये अर्थंत पठति निर्णयं कृत्वा गुरुणा योग्यं ज्ञात्वा सूरिपदे निवेशितः, पंचशतं सर्वमुनीन् पाठयति । एकदा निशायां संस्तारके सुप्तकेन मुनिना किमपि पृष्टं तस्याः अर्थः कथितः । द्वितीयागतेन तथा अर्थं पृष्टः तदा व्याकुलीभूतः चिन्तयितुं लग्नः । अहो मम वृद्धभ्राता धन्यो येन कोऽपि न पृच्छति । सुखेन सुप्त ममाप्यत्र निशि निद्रा नास्ति । मूर्खत्वे बहवो गुणाः सन्ति । मूर्खत्वं हि सखे ममापि रुचिरं तस्मिन् यदष्टौ गुणाः । निश्चितो बहु भोजनोऽपत्रपमना नक्तं दिवा शायकं ॥ कार्याकार्यविचारणैकवधिरो, मानापमाने समः।प्रायेणामयवर्जितो दृढवपुर्मूर्ख सुखं जीवति ॥१॥ अतः परं नैव पाठयामि। एकं पदमपि कस्याऽपि न कथ्यते । तदनन्तरं द्वादश दिनानि गुरुणा मौन इव स्थितं । पश्चादनालोचित वसुदेवाचार्यो मृतः । वसुसार-मुनिर्मानससरसि हंसो जातः । पूर्वोपार्जितकर्मणा श्रीज्ञानानिन्दया मूर्खताजनया मृतस्तव पुत्रोऽभवत्, सर्वशरीरेरोगोत्पत्तिगुरुणेति निवेदिता । वरदत्तेनपूर्वभवो ज्ञातो, राजा गुरुमपृच्छत्, रोगस्य शान्तिः कथं भवति, तत् कथय । वरदत्तस्य तप आम्बिलं कथितं । वरदत्तेन भणितं । मम तपशक्तिर्नास्ति । पश्चात्तु वरदत्तेन पंचमी गृहीता यावज्जीवं विधिनोक्तप्रकारेण । तदा राज्ञाऽपि सपरिकरेण एतत् तपो गृहीत्वा प्रजाअपि सर्वमपि व्रतं जग्राह । यथा पर्युषणा एव महोत्सवो भवति । वरदत्तस्य रोगा गताः । राजपुत्री-

रेक सहस्रा स्वयंवरेण परिणीतवान् । श्रेष्ठिपुत्री गुणमंजरी पंचमीतपप्रभावात् कर्म क्षयं गतं, रोगाः सर्वे क्षयं गताः । रूपवती जज्ञे । जिनधर्मवासितो जिनचन्द्रनामा वरो जातः। तौ वरदत्तगुणमंजर्यौ पंचमीं यावज्जीवमाराध्य मृतौ । वैजयन्ते विमाने सुरौ जातौ । वरदत्तस्य जीवः च्युत्वा पुष्कलावति विजये पुंडरिकीणी नगर्यां अमरसेननृपपत्नी गुणवत्याः शूरसेननामा पुत्रो जातः । स पाल्यमानो द्वादसवर्षीयो रूपलावण्य कलावान् जातस्तं पिता राज्यं दत्त्वा परलोकं प्राप्तः । कन्याशतमेकं परिणीतवान् । दश सहस्रवर्षाणि राज्यं पालयित्वा । सीमंधरस्योपदेशेन सुते राज्यं दत्त्वा प्रव्रजितः । एक वर्षसहस्रं संपालयित्त्वा केवलमुत्पाद्य मुक्तिं गतः, गुणमंजर्या जीवो विमानात् च्युत्वा रमणिविजयासन्नार्यां नगर्यां अमरसिंहो राजा, अमरवति भार्यायामुदरे समुत्पन्नः पुत्रो जातः। सुग्रीवेति नाम दत्तं । विंशतितमे वर्षे पित्रा राज्यं दत्तं । धर्ममासाद्य परलोकं प्राप्य, सुग्रीवराज्ञः, चतुरशीतिसहस्राः पुत्रा जाताः । प्रान्ते चारित्रसहितं केवलं प्राप्य । पूर्वलक्षमेकं प्रपाल्य मुक्तिं गतः ।

इति ज्ञानपंचमी कथा संपूर्ण ।



# श्री मौनएकादशो पर्वव्याख्यान

( शिखरिणी )

अरस्य प्रव्रज्या नमिजिनपते ज्ञानमतुलं ।
तथा मल्लेर्जन्मव्रतमपमलं केवलमलं ॥
वलक्षैकादश्यां सहसि लसदुद्दाममहसि ।
क्षितौ कल्याणानां क्षिपतु विपदां पंचकमदः ॥१॥

व्याख्या=क्षितौ पृथिव्यां अदः कल्याणानां कल्याणकानां पंचकं विपदः संसारापदः क्षिपतु परिहरतु । कदा तज्जातं तत्राह–महसि–मार्गशीर्षमासे वलक्षैकादश्यां-शुक्लैकादश्यां मौनैकादशी दिने इत्यर्थः । कथंभूते सहमिलमदुद्दाममहसि–लसत् उद्दामं उत्कटं महस्तेजो यत्र स तस्मिन्, किं तत्कल्याणां पंचकं जातं तदाह–अरस्यऽष्टादशतीर्थंकरस्यात्र दिने प्रव्रज्या दीक्षा समजायता तथा पुनर्नमिजिनपतेरेकविंशतितमतीर्थंकरस्यअतुलमनुपमं ज्ञानं केवलज्ञानमत्र दिने समुत्पेदे । तथा पुनर्मल्लेरेकोनविंशतितमजिनस्य जन्माथ च व्रतं दीक्षा । अपमलं-निर्मलं, अलं–अत्यर्थमथवासर्वत्रापि समर्थं

केवलं केवलज्ञानमिति कल्याणकत्रयमभूदनु श्रीअरनाथदीक्षा नमिनाथज्ञानमिति कल्याणकद्वयं मीलनेन जातं तत्पंचकमनेनविधिना, पंचस्वपि भरतक्षेत्रेषु तद्गणनया जाता तेषां पंचविंशतिः, तथैवान-यैवरीत्या समानधर्मत्वादैरवतक्षेत्र पंचकेऽपि तद्गणना तत्रापि जाता पंचविंशतिरनु च तद्वयो मीलने जाता तेषां पंचाशत्तदनंतरमतीतानागत वर्त्तमानकालविवक्षया त्रिगुणितानां तेषां जातं सार्द्धं शतमिति। कृत्वा मार्गशीर्ष शुक्लैकादशी महापर्व, तीर्थंकरकल्याणकदिनत्वादतो देवानामप्यागमनं महोत्सव बहुमान विषयत्वादुक्तं च–

पंचसु जिणकल्लाण एसु, महरिसितवाणुभावाओ ।
जम्मंतर नेहेणय, आगच्छंती सुरा इहयं ॥१॥

अत्रावसरे देवा संभूय नंदीश्वरद्वीपादावष्टाह्रिकामहोत्सवकरणेनाराधयंत्येतत्कल्याणकदिनं, साधु-श्रावकैरपीत्थं दानशीलतपोभावादिधर्मकृत्यैः सादरमाराध्यते स्म तत्कल्याणकमथ च मल्लिनाथस्य कल्याणकत्रयभावना–दीक्षादीनं एव मौनव्रतविधिना केवलज्ञानप्रापणाच्च मौनेकादशीति महापर्व प्रसिद्धमत एतद्दिने मल्लिनाथस्य कल्याणकविधिप्रतिपादनाय श्री स्थानांगगत सप्तमस्थानकोक्तं समूलं ससूत्रं संक्षिप्ततरमेतच्चरितं लिख्यते–

'मल्लीणं अरहा अप्पसत्तमे मुंडे भवित्ता अगाराओ अणगारियं पव्वइए,
तं मल्ली विदेहवररायकन्ना पडिबुद्धि इक्खागराया ।

चंदच्छाए अंगराया रुप्पी कुणालाहिवतो संखे कासीराया,
अदीणसत्तू कुरुराया जियसत्तू पंचालराया ॥१॥

एतद्वृत्तिः=मल्लिरर्हन् "अप्पसत्तमेति" आत्मना सप्तमः सप्तानां पूरणः आत्मा वा सप्तमो यस्यासावात्मसप्तमो मल्लिशब्दस्य स्त्रीलिंगत्वेऽपि अर्हच्छब्दापेक्षया पुंनिर्देशः । विदेहजनपदराजस्य वरकन्या, विदेहराज वरकन्या, तथा प्रतिबुद्धि नाम्ना इक्ष्वाकुराजः साकेतनिवासी, चंद्रच्छायो नाम अंगजनपदराजश्चंपानिवासी, रुक्मी नाम कुणालजनपपदाधिपतिः, श्रावस्तीवास्तव्यः शंखो नाम, काशीजनपदराजा वाराणसी निवासी अदीनशत्रुर्नाम, कुरुदेशनाथः हस्तिनागपुरवास्तव्यः जितशत्रु नाम, पंचालजनपदराजः कांपील्यनगरनायकः इति ।

आत्मसप्तमत्वं च भगवतः प्रव्रज्यायामभिहितपुरुषप्रव्रज्या ग्रहणाभ्युपगमापेक्षयाऽवगंतव्यं यतः प्रव्रजितेन ते प्रव्रजिताः, त्रिभिः पुरुषशतै र्बाह्यपर्षदा, त्रिभिश्चस्त्रीशतैरभ्यंतरपर्षदासौ परिवृत्तः, प्रव्रजित इति ज्ञातेषु श्रूयते । उक्तं च "पासो मल्ली य तिहिं सएहिंति ।" एवमन्येष्वपि विरोधाभासेषु विषयभागाः समवर्ति निपुणैर्गवेषणीयाः शेषं सुगममिति । इत्थं चैतच्चरितं ज्ञाताध्ययने श्रूयते-:

जंबूद्वीपे अपरविदेहे सलिलावती विजये वीतशोकायां राजधान्यां महाबलभिधानो राजा षड्भिर्बालवयस्यैः सह प्रव्रज्यां प्रतिपेदे । तत्र महाबल स्तैर्वयस्थानगारैरुचे-यद् भवांस्तपस्तपस्यति तद्वयमपी-

त्येवं प्रतिपन्नेषु तेषु यदा ते तमनुसरंतश्चतुर्थादि विदधुस्तदा सावधिकफललिप्सया तादृशमायया चाष्टमादि व्यधासीदेवं च स्त्रीनामगोत्रकर्मासौ बबंधार्हदादिवात्सल्यादिभिश्चहेतुभिस्तीर्थंकर नामेति । ततस्ते जीवितक्षयाज्जयंताभिधाने विमानेऽनुत्तरसुरत्वेनोत्पेदिरे । ततश्च्युत्वा महाबलो विदेहेषु जनपदेषु मिथिलायां राजधान्यां कुंभकराजस्य प्रभावत्या देव्यास्तीर्थंकरत्वेनासीत् जन्म, मल्लिरिति नाम च पितरौ चक्रुः । तदन्ये यथोक्तेषु साकेतादिषु संजज्ञिरे । ततो मल्ली देशोनवर्षशतजाता, अवधिना तानाभोगयांचकार, तत्प्रतिबोधनार्थं च गृहोपवने षट्गर्भगृहोपेतभवनं तन्मध्यभागे च कनकमयीं शुषिरां मस्तकछिद्रां षट्पिधानां स्वप्रतिमां कारयामास । तस्यां चानुदिवसं स्वकीयभोजन कवलं प्रक्षिपयामास । इतश्च साकेते प्रतिबुद्धिराजः पद्मावत्या देव्या कारितेनागयज्ञे जलजादिभास्वरपंचवर्ण-कुसुमनिर्मित श्री दाम गंडकं दृष्ट्वा अहो अपूर्वभक्तिकमिति विस्मयायदमात्यमुवाच "दृष्टं क्वापीदृशं ?" सोऽवचोत् मल्लिविदेहवरराजकन्यासत्क श्रीदामगंडापेक्षयेदं लक्षांशेऽपि शोभया न वर्त्तते । तदा राज्ञा प्रोचे सा पुनः कीदृशी ? मंत्री जगादान्या नास्ति तादृशीत्युपश्रुत्य संजाताऽनुरागोऽसौ मल्लिवरणार्थं दूतं विससर्ज ।

तथा चंपायां चंद्रछायराजः कदाचिदर्हद्भक्ताभिधानेन श्रावकेण पोतवणिजा वास्तव्येन यात्रा प्रतिनिवृत्ते दिव्ये कुंडलयुग्मे कौशलिकतयोपनीते सति प्रप्रच्छ यदुत यूयं बहुशः समुद्रं लंघयथ, तत्र

किंचिदाश्चर्यमपश्यत् ! सोऽवचोत् स्वामिन्नस्यां यात्रायां समुद्रमध्ये अस्माकं धर्मचालनार्थं देवः कश्चिदुपसर्गं चकाराविचलने चास्माकं तुष्टेन तेन कुंडलयुगलद्वितयमदायि, तदेकं कुंभकस्यास्माभिरुपनिन्ये । तेनापि मल्लिकन्यायाः कर्णयोः स्व करेण विन्यस्तं । सा च कन्या त्रिभुवनाश्चर्यभूता दृष्टेति श्रुत्वा तथैव दुतं प्रेषयामास ।

तथा श्रावस्त्या नगर्यां रुक्मिराजः सुबाहु नामिकायाः स्वदुहितुश्चातुर्मासिकमज्जनमहोत्सवे नगरीचतुःपथनिवेशितमहामंडपे विभूत्या सज्जितां तां तत्रैवोपविष्टस्य पितुः पादवंदनार्थमागतां अंके निवेश्य तल्लावण्यमवलोकयन् व्याजहार यदुत भो वर्षधर ! दृष्ट ईदृशोऽन्यस्याः कस्यश्चिदपि कन्यायाः मज्जनकमहोत्सवोऽवोचद्देव ! विदेहवरराजकन्यासत्क मज्जनमहोत्सवापेक्षया अयं लक्षांशेऽपि रमणीयतया न वर्त्तते इत्युपश्रुत्य तथैव दूतं प्रेषयतिस्मेति ।

तथा अन्यदा मल्लिसत्क दिव्यकुंडलयुग्म संधि विंजघटे तत्संघटनार्थं कुंभकेन राज्ञा सुवर्णकारा समादिष्टास्तथैव कर्तुमशक्तुवंतश्च नगर्याः निष्कासिता वाराणस्यां नगर्यां शंखराजमाश्रिताः । भणिताश्चैते, तेन राज्ञा केन कारणेन कुंभराजेन निष्कासिता यूयं ? तेऽभिदधुर्मल्लिकन्या सत्कविघटित कर्णकुंडलसंधाना शकनेनेति । ततः कीदृशी सेति पृष्टेभ्यस्तेभ्यो मल्लिरूपमुपश्रुत्य तथैव दूतं प्राहिणोत् । ॥ ११ ॥
तथा कदाचिन्मल्ल्या मल्लदिन्नाभिधानोऽनुजो-भ्राता सभां चित्रकरैश्चित्रयामास । तत्रैकेन चित्र-

कग्युना लब्धिविशेषवता यवनिकांतरिताया मल्लिकन्यायाः पादांगुष्ठमुपलभ्य तदनुसारेण मल्लिसदृशमेव तद्रूप निर्वर्त्तितं । ततश्च मल्लदिन्नकुमारः सांतःपुरश्चित्रसभायां प्रतिवेश । चित्राणि विचित्ररूपाण्यवलोकयन्मल्लिरूपं ददर्श । साक्षान्मल्लीयमिति मन्यमानो ज्येष्ठाया भगिन्या गुरुदेवभूताया अहमग्रतोऽविनयेनायत इति भावयन्परमव्रीडां जगाम । ततस्तद्वेत्री चित्रमिति न्यवेदयत्ततोऽसावस्थाने तेनेदं लिखितमिति कुपितस्तं वध्यमज्ञापितवान् । चित्रकर श्रेणि तु ततस्तं मोचयामास तथापि मल्लदिन्नकुमारः संदेशकं छेदयित्वा तं निर्विषयमादिदेश । स च हस्तिनागपुरे अदीनशत्रुराजमुपाश्रितस्ततो राजा तन्निर्गमकारणं प्रपच्छ । तेन च तथैव कथिते दूतं प्रहिणोति स्मेति । तथा कदाचिच्चोक्षाभिधाना परिव्राजिका मल्लिकाभवनं प्रविवेश । तां च न धर्मं शौचं धर्मं चोद्गारयंती मल्लिस्वामिनी निर्जिगाय निर्जिता च सती सा कुपिता कांपील्यपुरे जितशत्रुराजमुपाश्रिता । भणितं च नरपतिना चोक्षे ! बहुत्र त्वं संचरस्यतोऽवाक्षीः कांचिदस्मदंतः पुरंध्री सदृशीं ? सा व्यजहार विदेहवरराजकन्यापेक्षया युष्मत्पुरंध्र्यो लक्षांशेऽपि रुपसौभाग्यादिभिर्गुणै न वर्त्तंते इति श्रुत्वा तथैव दूतं विसर्जितवानिति । एवमेते षडपि दूताः कुंभकं कन्यां याचितवन्तः । स च तानपद्वारेण निष्काशितवान् । दूतवचनाकर्णनाज्जातकोपाः षडप्यविक्षेपेण मिथिलां प्रति प्रतस्थिरे । आगच्छतश्चतानुपश्रुत्य कुंभक सबलवाहनो देशसीमांत गत्वा रण रंगरसिकतया तान् प्रतीक्षमाणस्तस्थौ, आयातेषु तेषु लग्न-

मायोधनं बहुत्वात् परबलस्य निहतकतिपयप्रधानपुरुषमतिनिशितशरशत जर्ज्जरित जयकुंजरमति-खरक्षुरप्रहारोद्भुत वाजिविसरविक्षिप्ताश्चवारमुत्तुंगमत्तमतंगज तूर्णितवक्रि चक्रमूल्लून छत्रं पतत्पताकं कांदिशीककातरं कुंभराजसैन्यं भंगमगमत्ततोऽसौ निवृत्त्य रोधकसज्जः सन्नासामासे ततस्तज्जयोपाय-मलमभानमति व्याकुलमानसं जनकमवलोक्य मल्ली समाश्वासयंती समादिश यदुत भवते दीयते कन्येत्येवं प्रतिपादन पुरस्सरं प्रच्छन्न पुरूषप्रेषणोपायेन पुरि पार्थिवाः षडपि प्रवेशयंता। तथैव कृतं प्रवेशितास्ते पूर्वरचित गर्भगृहेषु मल्लिप्रतिमामवलोक्य च ते, सेयं मल्लीरितिमन्यमानास्तद्रूपयौवन लावण्येषु मूर्छिता निर्निमेषदृष्ट्या तामेवावलोकयंतस्तिष्ठंति स्म। ततो मल्ली तत्रा जगाम प्रतिमायाः पिधानं चापममार ततस्तस्या गंधः सर्पादिमृतकं गंधादितिरिक्तो गंध उद्धाव। ततस्ते, नासिकाः पिदधुः पराङमुखाश्च तस्थु मल्ली च तानेनमवादीत्, किं नु भो भूपा यूयमपिहितनासिकाः पराङमुखीभूता-स्ते, ऊचुः गंधेनाभिभूतत्वात्पुन साऽवोचत् यदि भो देवानां प्रियाः १ प्रतिदिनमतिमनोज्ञाहारकवलक्षेपेणै-वंरुपः, पुद्गलपरिणामः प्रवर्त्तते, कीदृशः पुनरस्यौदारिकस्य शरीरस्य खेलवातपितशुक्रशोणितपूयाश्रवस्य दुरंतैश्वासनिःश्वासपूतिपुरीषपूर्णस्य चयापचयिकस्य शटनपतनविध्वंसनधर्मकस्य परिणामोभविष्यतीति। ततो मा यूयं मानुष्यक कामेषु सजत्। किं च=

'किं च तयं पम्हुट्ठ जं तत्थ ये मो जयंतपवरंमि।
वुत्था समयनिबद्धादेना तं संभरह जाइति ॥"

भणिते सर्वेषामुत्पन्नजातिस्मरणमथ मल्लिरवादीदहं भो संसारभयात् प्रव्रजिष्यामि यूयं किं करिष्यथ ते ऊचुर्वयमप्येवं। ततो मल्लिरवोचत यद्येवं ततो गच्छत स्वस्व नगरेषु स्थापयत पुत्रान् राज्येषु ततः, प्रादुर्भवतममांतिकमिति । तेऽपि तथैवेति प्रतिपेदिरे ततस्तान्मल्ली गृहीत्वा कुंभकराजांतिकमा जगाम । तस्य तान् पादयोः पातयामास । कुंभराजोऽपि तान् महता प्रमोदेनापूपुजत् स्वस्थानेषु विससर्जेति । मल्ली च सांवत्सरिक महादानानंतरं मार्गशीर्षशुक्लैकादश्यामष्टमभक्तेनाश्विनीनक्षत्रेऽष्टभिर्नंदि नंदिमित्रादिभिर्नागवंश्यकुमारैस्तथाबाह्यपर्षदा पुरुषाणां त्रिभिः शतैरभ्यंतरपर्षदा च स्त्रीणां त्रिभिः शतैः सह प्रवव्राज । उत्पन्नकेवलश्च तान् प्रव्राजितवानिति ।

प्रणम्य श्रीमद्रामेयं, पार्श्वयक्षादिपूजितम् ।
माहात्म्यं स्तौमि श्रीमौनैकादश्या गद्यपद्यभृत् ॥१॥

स्पष्टः । माहात्म्यं चेदं-द्वारिकायां श्रीनेमिजिनः समवसृतः । उद्यानपालवाक्यतः श्रीकृष्णो मुदितः सर्वद्धर्या श्रीशिवेयं नत्वेति देशनामशृणोत् । यतः-

एगदिने जे देवा चवंति तेसिं पि माणुसा थोवा ।
कत्तो मे मणुयभवो इति सुरवरो दुहिओ ॥१॥

एवं नरत्वं दुर्लभं ज्ञात्वा न प्रमादो विधेयः । यत :-

अन्नाण १ संसओ २ चेव मिच्छत्ताणं ३ तहेव य ।
रागो ४ दोसो ५ मइब्भंसो ६ धम्मम्मि य अणायरो ॥७॥
जोगाण दुप्पणिहाणं ८ पमाओ अट्ठ महा भवे ।
ससारुत्तारकामेण सव्वहा वज्जियव्वओ ॥२॥

इत्यष्ट प्रमादा हेयाः । इत्यादिधर्मदेशनां श्रुत्वा इन्द्रानुजः श्रीजगद्गुरुं प्राह—"राजकार्यव्यग्रेण मया कथमजस्रं धर्मो विधीयते ? अतो वर्षवासरेषु एकं सारं दिवसं वद" भगवानुवाच—हे वत्स !

एवं चेत्तर्हि मार्गस्य, मासे पक्षे सिते शुभा ।
एकादशी प्रयत्नेन, त्वया सेव्या पीताम्बर ॥१॥

अस्मिन् दिने वर्तमानचतुर्विंशतिकायां त्रयाणां जिनानां पञ्च कल्याणकानि जातानि । यतः—

अस्यां चक्रिपदं हित्वाऽग्रहीदरजिनो व्रतम् ।
जन्म दीक्षां च सज्ज्ञानं, मल्ली ज्ञान नमीश्वरः ॥१॥

इत्थं पञ्चसु भरतेषु नियतं पञ्च पञ्च कल्याणकानि जायन्ते । एवं दशस्वपि क्षेत्रेषु एकत्र मिलनात् पञ्चाशत्सङ्ख्ययाऽर्हतां कल्याणकानि भवन्ति । त्रिकालविभेदतः सार्धशतं भवेत् । त्रिंशच्चतुर्विंशतिकामध्ये नवति जिनानां तानि १५० ज्ञातव्यानि । अतोऽयं वासरः श्रेष्ठतरः श्रीनेमिजिनेश्वर-

प्रणीतं लोकोत्तरस्वरूपमयं चैकादशीवर्णनं निशम्य श्रीमुकुन्दो जिनं प्राह—"केनासौघस्रः प्राक् समाराधितः ?" आप्तो हरिं प्रति सुव्रतश्रेष्ठिनः संबन्धं जगौ, तद्यथा—

धातकीखण्डे विजयपत्तने राज्ञा दत्तसंमान इभ्यपङ्क्तिपुरोगः सूरश्रेष्ठ्यभूत्। तस्य सुशीला सूरमती कान्ता। एकदेभ्यः सुखसुप्तो निद्रान्ते इत्यचिन्तयत्—"प्राक्पुण्यपचेलिमभरेण सौख्यसमनुगतवासरान् गमयामि, परं प्रेत्यहितावहं नकिञ्चित्करोमि, तद्विना सर्वं निरर्थकं"। चिन्तयतीति श्रेष्ठीशे मार्तण्डोदयोऽभवत्। प्रातः श्रीगुरुं वन्दितुं प्रययौ। गुरुभिर्धर्मदेशना प्रारब्धा—

आलस्स १ मोह २ वन्ना ३ थंभा ४ कोहा ५ पमाय ६ किविणत्ता ७।
भय ८ सोगा ९ अन्नाणा १० वक्खेव ११ कुरुहणा १२ रमणा १३ ॥१॥

इति त्रयोदश काठिया (कष्टा) स्त्याज्याः। ये न त्यजन्ति ते नरकं प्राप्नुवन्ति। यतः—

पणकोडि अडसय (ट्ठि) लक्खा नवनवइसहस्सपंचसया।
चुलसी अहोय नरए अपइट्ठाणम्मि (से) वाही ॥१॥

हे इभ्येश! श्वभ्रादिदुःखत्यागार्थं नित्यं धर्मो विधेयः। अचिन्त्यो महिमा पुण्यस्य। यतः—

भरहे य केइ जीवा मिच्छादिट्ठी य भद्दवा भावा।
ते मरिऊण नवमे वरिसम्मि हुंति केवलिणो ॥१॥

सुलभबोधिनां न किमपि दुष्करं। इति निशम्य श्रेष्ठी स्माह–"गृहकर्मगतेन मया नित्यं धर्मं कर्तुं नो शक्यते, तस्मादेकवासरं ब्रूत, यस्मिन् दिने आराधिते सांवत्सरिकपुण्यमाप्यते" ततो गुरुरगृणात्–"मार्गशीर्षस्यैकादशीं सितामष्टप्रहरपौषधोपवासेन सावद्यवाग्रोधेन मौनेन चाराधय, मासेष्वेकादशस्वपि विधिवत्तपसि पूर्णे सति मुदोद्यापनं विधेहि"। तदाकर्ण्यैकादशीव्रतं परिकरयुतेन श्रेष्ठिनाऽङ्गीचक्रे। अथोद्यापनं व्रते पूर्णे विधिना विदधे। ततस्तस्य पञ्चदशेऽह्नि सहसा शूलमुत्पन्नं। तद्रोगेण पञ्चत्वं प्राप्य सुरलोके सुरोऽजनि। तत्रारणे कल्पे एकविंशतिसागरोपमायुष्कं परिपाल्य ततश्च्युत्वा इह भरते सौरिपुरे समृद्धदत्तश्रेष्ठ्यभवत्, तस्य प्रीतिमती पत्नी, तस्याः कुक्षाववातरत्। ततो गर्भमहिम्ना व्रतं गृह्णामि, अणुव्रतमहाव्रतधारकानशनादिभिःपूजयामि, सर्वसंसारिजीवान् व्रतसंपृक्तान् विदधामि, गीतनृत्यवादित्रवार्ताविनोदेषु सम्यग्व्रतपालकगुणान् शृणोमि" इत्यादि, दोहदेषु संपूर्णेषु समये रूपलावण्यसंयुतं तनयमसूत। एतस्य नालक्षेपार्थं भुवि खातायां निधानं प्रकटीबभूव, महोत्सवेन सुव्रताभिधानं चक्रे। क्रमादभ्यस्ताः सकलाः कलाः। यौवने पित्रैकादशकुमारीभिः सह पाणिपीडनमहो विदधे। अन्यदा पितरि त्रिदिवं गते एकादशस्वर्णकोटिस्वामी स सुव्रतोऽभूत। एकदा श्रीपूज्यवन्दनार्थं गतः। अत्र श्रीगुरुवर्णनं, तद्यथा–स्मरशर (५) मितसमितिभिः समितः समय (३) मेयगुप्तिभिर्गुप्तः, सुमेरुनेत्र (२५) प्रमितभावनाभावितस्वान्तः, पञ्चमहायममहाभारोद्वहने धुरीणः, दिविजमनुजतिर्यग्योनिजात्मजजनित–भैरवोपसर्गवर्गैर

ञ्चरीणः, द्वात्रिंशतिपरीषहप्रतिपक्षचमूजेता, तरणितुरगनेत्र (२७) प्रमितगुणगरिष्ठविशिष्ठतरमुनिनिकरनेता, पञ्चविधाचारनिरतिचारचरणनिरतः, प्राकृतजनमूर्च्छाविधाननिदानविषयग्रामविरतः, दूरीकृतत्रिभुवननिवासिजनप्रेष्यताविधानप्रसर्पद्दर्पप्रसरकुसुमशरविकारः, सम्यगवगतश्रीमदार्हतमतसम्मतसूक्ष्मतरविचारसकलभवसिद्धिकलोकहृदयंगमः, सुसंयतपञ्चप्रमिततरलतरकरणतुरंगमः, निजशुद्धादेशदेशनानिर्नाशितभव्यजन्तुजातजीवितभूतश्रीमत्सम्यग्दर्शननिर्नाशनप्रत्यलमिथ्यादर्शनोग्रगरलः, दुर्जनदुर्वचनरचनाप्रचण्डवात्याविसर्पणेऽप्यतरलः, क्षमामार्दवार्जवमुक्तिप्रभृतिदिग्भेदश्रीमच्छ्रमणधर्मसमाराधनसावधानहृदयसदनदूरोत्सारितशल्यभूतनन्दभेदनिदानः, नवविधश्रीमद्ब्रह्मचर्यगुप्तिसम्यक्संरक्षणैकपरायणः, दुष्कर्मदैत्यसमुदायविध्वंसने नारायणः, दूरपरत्यक्तविचिकित्सारत्यरतिभीतिहास्यः, चन्दनचर्चकच्छेदकजनयुग्मसमानमनोविलासः, सर्वथा निर्ममतया निराशीकृतशोकः, निजनिरुपमवचनकलारञ्जितसकललोकः, सकलश्रीमदार्हतागमपारयायी, जिणगणधरसमनुचीर्णसम्यग्मार्गानुयायी, इहलोकपरलोकनिश्रितः, निखिलचराचरजन्तुजातविहितमानापमानप्रशंसननिन्दनलाभालाभसुखदुःखप्रमुखेष्वपि समानमानसः, निजानुपमश्रीमदार्हतमतस्थापनकौशलसहस्रदीधितिसमुदयनिवृत्तप्रचारीकृतसमस्तदुर्मतितामसः, अप्रशस्ताश्रवद्वारनिरोधकः, बहुलभव्यजनसमाजबोधकः, परित्यक्तवसु (८) विधमदः, तिग्मरोचिःप्रमिततपोभेदभैषज्यक्रियाप्रतिक्रियमाणदुर्भेद्याष्टकर्मगदः, पञ्चविधस्वाध्यायविधिविधानविषापनसावधानः, सकलजगज्जन्तुजातवितीर्यमाणाभयदानः, पारावार इव

गम्भीरः, मन्दरमहीधर इव धीरः, शङ्ख इव निरञ्जनः, अज्ञानतिमिरावृत्तान्तरनयनजनतावितीर्णतदुद्घाटनप्रत्यलतद्विमलताहेतुपरमज्ञानाञ्जनः, कूर्म इव गुप्तेन्द्रियः, समासादितमोहमहामहीपतिविजयः, भारण्डविहङ्गम इवाप्रमत्तः, पुष्करपत्रमिव निरुपलेपचित्तः, सहस्रांशुरिव दीप्ततेजाः, रागद्वेषमहामल्लविदलनविषयप्रयुक्तमहौजाः, सोम इव सौम्यतागुणगरिष्ठः, सकलसाधुजनप्रकृष्टः, पञ्चानन इव दुष्प्रधर्षणीयः, सकलजनाभिगमनीयः, कुञ्जर इव शौण्डीर्यगुणोपेतः, सकलदोषपोषव्यपेतः, वृषभ इव जातस्थामा, बहुवादिविजयप्रवर्धितधामा, पारावारवारिवद्विशुद्धहृदयः, संसारकारागारमोहमहाचरटनिरुद्धतनुभृत्त्राने विहितादयः, गगनमिव निरालम्बः, महानन्दमहानगरसरणिप्रवृत्तिविषये विनिर्मुक्तविलम्बः, शून्यनिकेतनमिव निष्प्रतिकर्माङ्गः, परकृतनिलयस्थितिर्यथा भुजङ्गः, परित्यक्तसकलसांसारिकसंबन्धः, पवन इव निष्प्रतिबन्धः, जीव इवाप्रतिहतगतिः, श्रीमज्जिनप्रवचनानुसारमतिः, विहङ्गम इव सर्वतो विप्रयुक्तः, किंबहुना ? श्रीमदनूचानसमुचितज्ञानसमायुक्तः श्रीमान् धर्मघोषनामागुरुः स्वर्गतरुरिव जङ्गमः समवासार्षीत् । तत्रावनिप्रदेशे सुव्रताभिधान इभ्यपतिर्निजसुकृतपुञ्जमिव मूर्तिमन्तं प्रकटीभूतं श्रीगुरुं निरीक्ष्य स्वं धन्यमभिमन्यमानःससंभ्रमं समुत्थाय सविनयं विधिवदभिवन्दितवान् इति । अथातः सकलभव्यजनमनः प्रमोदमेदुरताविधानसावधानां कायिकवाचिकमानसिककर्मकदम्बकबहुभवोपार्जितशुभेतरकर्मकलापमहामहीरुहसमूलनिर्मूलनप्रथमप्रावृषेण्यसजलजलजलधरवृष्टिप्रकृष्टवृद्धिप्रापितबहुल – सलिलसमूहतारकजनदुराकलनीयशैवलिनीमहाप्र-

वाहप्रतिमितधारिणीं सकल श्रोतृजनश्रवण पवित्रीकरणमन्त्रमयमहाविद्यामयीं संयोगवियोगादिजिनमतमहादुःखोर्मिमालाममाकुलमहासाहमिकजनदुगकलनीयदुरन्तसंमारपारावारतारणतरीप्रतिरूपां चतुरशीतिलक्षजन्तुयोनिपरिभ्रमणकादिशीकजनमहानिर्वेदजननवाचं विशेषतः पञ्चपर्वाराधनफलां देशनां निशम्य सुव्रतश्रेष्ठी जातिस्मृति ललौ। ततो गुरुं स्माह-हे पूज्य ! मया प्राच्यभवे एकादशीतपश्चक्रे तत्प्रभावेणारणकल्पं प्राप्यात्रैकादशस्वर्णकोटीनां प्रभुः प्रथितः। अथ किं सुकृतं कुर्वे ? यदनल्पफलं भवेत् ?" गुरूः प्राह-"येन सौख्यं लब्धं तदेव व्रतं त्वं भज, येन निरामयो देहो जातस्तदौषधं पुनः पुनः सेव्यं। यतः—

विधिना मार्गशीर्षस्यैकादशीधर्ममाचरेत् ।
यदेकादशभिर्वर्षैश्चिरात्स शिवं भजेत् ॥ १ ॥

ततः सभार्यः श्रेष्ठी तत्तपः स्वीचकार। अन्यदेभ्यः सपरिकरोऽहोरात्रपौषधं चक्रे एकादश्यां ज्ञातवृत्तान्तास्तस्करा रात्रौ समेयुः, तैर्गृहमध्ये धनं पुञ्जीकृतं, यावद्ग्रन्थि बद्ध्वा पलायन्ति तावत्ते शासनदेव्या स्तम्भिताः, प्रातर्दुर्गपालेन दृष्टवा दृढं बद्ध्वा राज्ञः पुरो निन्यिरे। भूपो हननार्थमादिष्टवान्। प्रातः श्रेष्ठी पौषधं पारयित्वा घनं घनं प्राभृतं कृत्वा तान् दस्यूनमोचयत्-"हे भूप ! ममौकसः कर्मकरा इमे व्यस्तं पृथक् पृथक् पतितमभितो धनरत्नादिकमेभिर्गृहमध्यत एकीकृत्य न्यस्तं, पादयोर्लुठतः सङ्खुनं निषेधितं, अतो मदीयभृत्या अमी न वधार्हाः"। इति श्रुत्वा पौराः श्रेष्ठिनः प्रशंसां चक्रुः। तदनु श्रेष्ठी पारणकं

चकार। पुनरेकादश्यां श्रेष्ठी पौषधमगृहीत्, रात्रौ दावनरपुरे समग्रे वह्निः प्राज्वलत्। सर्वे जना नश्यन्तः कान्दिशीका जगुः-हे श्रेष्ठिन्! जैनमते पाकाराणि व्रतानि सन्ति" इति प्रोक्तोऽपि व्रतभङ्गभयात् क्वचिन्नानश्यत्। श्रेष्ठिनो गृह-वक्षार-हट्टादीनि न भस्मीबभूवुः। जलधौ द्वीपवत्तद्गृहाणि वीक्ष्य निखिला नागरास्तद्व्रतं प्रशशंसुः। ततः पूर्णे व्रते एकादशैकादश वस्तूनि संमील्य महदुद्यापनं विधाय सङ्घपूजादि-सप्तक्षेत्रेषु द्रव्यं वपन् जनुः कृतार्थमकरोत्।

तस्य चैकादशोपुण्याद्रामा एकादशाभवन्।
दश दश पुत्राः पुत्र्यश्चैकैकाश्च प्रतिस्त्रियम् ॥ १ ॥

एकदा चतुर्ज्ञानधरो विजयशेखरसूरिस्तत्र समागात्, तदुक्तवैराग्यवाण्या प्रबुद्धः श्रेष्ठी सभार्यः पुत्रेषु गृहभारं न्यस्यातुच्छैरुत्सवैः सर्वविरतिमग्रहीत्। निरतिचारं चारित्रं पालयन् स द्वादशाङ्गीं पपाठ। तथा-

षाण्मासिकं तपश्चैकं, चतुर्मास्याश्चतुष्टयम्।
सोऽष्टमानां शतं षष्ठ,-तपसां द्वे शतेऽकरोत् ॥ १ ॥

तत्पत्न्य एकादशापि मासस्य संलेखनां कृत्वा केवलज्ञानेन मुक्तिमाददिरे। अन्यैकादश्यां मौनसंश्रिते सुव्रते एकस्य साधोः कर्णे तीव्रा वेदना समभूत्। इतश्च मिथ्यादृग्व्यन्तरसुर एकः सुव्रतमुनिं चालयितुं तत्साधोर्देहेऽवतीर्य रात्रौ वेदनामकरोत्। अथ सुव्रतं प्रति स साधुरवक्-"श्राद्धनिकेतनं गत्वा ईदृङ्-

मदीयाङ्गस्वरूपं कथय, यथा मम चिकित्सां कारयेत्" । सुव्रतो दध्यौ-"अधोपाश्रयाद् बहिर्गमनं मया निषिद्धं, मौनं च कृतं, तत्कथं गृहस्थसमीपे गच्छामि ?" इति चिन्तयन्तं सुव्रतानगारं प्रति सकोपाटोपः स वदन् धर्मध्वजेन निर्दयमताडयत्-"नास्य महात्मनो दोषः, किं तु ममैव, यस्मादहं चिकित्सां न कारयामि" इत्यादि लोकोत्तरध्यानारूढं निश्चलं सुरगिरिवदकम्प्यस्वरूपं तं मत्वा स सुरः स्थिरो बभूव । सुव्रतसाधुर्भावनां भावयन् लोकालोकप्रकाशकं केवलज्ञानं प्रपेदे । तदाऽऽसन्ननिर्जराः पञ्चमज्ञानोत्सवं चक्रुः । चामीकराम्भोजे स्थित्वा दयामयं धर्ममवदत् बहून् भव्यान् पृथ्व्यां विहरन् प्रबोधयन् प्रान्ते संलेखनां विधाय सिद्धिसुखं समापेति ॥

इति नेमिमुखादेकादशीमाहात्म्यमुज्ज्वलम् ।
आकर्ण्य पौरसहितो हरिराराधयत् स्वयम् ॥ १ ॥
इत्थमाराधयन्त्येनां, यथाशक्ति यथाविधि ।
ते भुक्त्वा स्वर्गसौख्यानि, लभन्ते शिवसंपदम् ॥ २ ॥

श्री मौनएकादशी पर्व-व्याख्यान समाप्तः

# 卐 मेरुत्रयोदशी-कथा 卐

- रचयिता -

जैनरत्नव्याख्यानवाचस्पति स्व. पू. आचार्य श्रीमद् विजय

## * लब्धिसूरीश्वरजी महाराज *

( अनुष्टुभ् )

नाभेयाय नमस्तस्मै विघ्ननाशकराय यम् । नत्वा निर्विघ्नकल्याणा जग्मुर्मुक्तिपदं जनाः ॥ १ ॥
श्रीचिन्तामणिपार्श्वेत-मीडरस्थं नमाम्यहम् । यस्यदर्शनमात्रेण मर्त्योऽप्यमरतांव्रजेत् ॥ २ ॥
तीर्थस्यास्य प्रणेत्रे मे श्रीवीराय नमो नमः । यदाज्ञां हृदये कृत्वा विघ्नपारङ्गता न के ? ॥ ३ ॥
कथा मेरुत्रयोदश्या भव्यानां सुखहेतवे । लिख्यते पद्यरूपेयं पूर्वगद्यानुसारतः ॥ ४ ॥
माघकृष्णत्रयोदश्या माहात्म्यं वर्णितं यथा । श्रीवीरे गौतमाग्रे त- दस्माभिरपि लिख्यते ॥ ५ ॥
श्रीनाभेयाजितप्रभ्वो-रन्तरे गृहिधर्मयुक् । अनन्तवीर्यराजा ऽभू - दयोध्यायां सुखाकरः ॥ ६ ॥
हस्त्यश्वरथपंत्तीनां नायकः सुखदायकः । स्त्रीणां पञ्चशती जज्ञे तस्य रूपमनोहृताम् ॥ ७ ॥

त.सु प्रियमती नाम्ना पट्टराज्ञी बभावति । तारास्वन्तर्गतश्चन्द्रो यथा काशे तथा गृहे ॥ ८ ॥
तस्य धनञ्जयो नाम मन्त्री बुद्धि विशारदः । नीतिरीतिषु विज्ञोऽस्ति राजकार्येषु दक्षकृत् ॥ ९ ॥
सर्वथास्ति सुखी राजा परं सूनोरभावतः । दुःखिनं मन्यते स स्वं सुताऽभावे कुतः सुखम् ?॥ १० ॥
सुशोच स कथं भावी विना पुत्रं प्रजागणः । मयि परगतिं प्राप्ते को धाताऽस्य भविष्यति ? ॥ ११ ॥
पश्चादचिन्तयद् राजा सर्वं धर्मप्रभावतः । भव्यं भवति भव्यानां तत्तं कुर्वे निरन्तरम् ॥ १२ ॥
देवपूजागुरूपास्ति–स्वाध्यायःसंयमस्तपः । क्रियते भक्तियुक्तेन तेन पुत्रफलेच्छया ॥ १३ ॥
तस्मिन्नवसरे कोपि कोणकाह्वो महामुनिः । पट्टराज्ञीगृहे प्राप्तः प्रासुकाहारहेतवे ॥ १४ ॥
नत्वा तच नृपो राज्ञी पुत्रप्रश्नं प्रचक्रतुः । नाथाऽऽवयोः सुतो नास्ति भावी किं सोऽथवा नहि ?॥ १५ ॥
उक्तवान् स मुनिर्धन्यो युज्यते गुणिनां नहि । ज्योतिष्कादि निमित्तं तु वदितुं परयोगिनां ॥ १६ ॥
अत्यन्तं प्रार्थितः सन्सोऽभाषिष्ट मुनिपुङ्गवः । दयां कृत्वा दयालुर्वा पङ्गुः पुत्रो भविष्यति ॥ १७ ॥
आहारं स गृहित्वागात्ततस्ताभ्यां विचारितम् । अपुत्रात्पुत्रकः पङ्गुरपि भाव्यति सौख्यकृत ॥ १८ ॥

अत्रान्तरे गर्भविवर्द्धिताङ्गाः, राज्ञी बभूवाऽऽहित धर्मरङ्गा ।
तयाथ पुर्णे समये प्रसूतः पद्भ्यां विहीनस्तनुजोऽतिदीनः ॥ १९ ॥ (उपजाति)

जातर्हेण राज्ञाऽस्य महान् जन्मोत्सवः कृतः । भोजयित्वा कुटुम्बं स्वं तद्दिनाद् द्वादशेऽहनि ॥ २० ॥

नाम्ना पिङ्गलरायोऽस्तु स्वजनानां समक्षतः । इत्युक्त्वा कृत सत्कारान् स्वजनान् विससर्ज सः ॥२१॥(युग्मम्)
पिता रक्ष तं यत्नान्दन्तःपुरे हि पिङ्गलम् । लोकाः पृच्छन्ति तद्बीजं कल्पितं स तदावदत् ॥ २२ ॥
रूपेण जितकन्दर्पः कुमारोऽस्ति महामनाः । बिभेमि दृष्टिदोषाद्धो न प्रादुष्क्रियते ततः ॥ २३ ॥
सर्वस्मिन्नगरेऽनेन कथनेनाति विस्तृता । किं वदन्ती कुमारोऽयमतिरूपशिरोमणीः । २४ ॥
क्रमेण ववृधे सून् राज्ञीनृपमनोरथैः । यथा फलप्रदो वृक्षो विहगानां मनोरथैः ॥ २५ ॥
अयोध्यातस्तदा दूरे सपादशतयोजने । देशो मलयनामास्ति तत्र ब्रह्मपुरं पुरम् ॥ २६ ॥
तत्र काश्यपगोत्रीयो राजा शतरथोऽभवत् । इन्दुनत्यभवत्तस्य पट्टराज्ञी मनोहरा ॥ २७ ॥
तत्कुक्षिसंभवा नाम्नाऽतिगुणा गुणसुन्दरी । जाताऽतिशयलावण्या सौभाग्यस्य निकेतनम् ॥ २८ ॥
पित्रोरतिप्रिया सा यदन्यसूनोरभावतः । वरयोग्यां पिता दृष्ट्वा विवाहचिन्तन व्यधात् ॥ २९ ॥
अयोग्या मिलिताः सर्वे वरश्चिन्तां तदाकरोत् । किं कर्त्तव्यं मया हा हा ! पुत्रिकायाः कृतेऽधुना ॥ ३० ॥
तदा नगरवास्तव्याः शकटानि क्रयाणकैः । भृत्वा व्यापारिणश्चेलु र्नानादेशान्तरं प्रति ॥ ३१ ॥
राजा बभाण लोकान्वो यदि योग्यो वरो मिलेत् । सम्बन्धस्तु तदाकार्यस्तथेति प्रतिपेदिरे ॥ ३२ ॥
भ्रमद्भिस्तैस्तु सम्प्राप्याऽयोध्या नाम्ना महापुरी । क्रयाणकानि विक्रीय महद् द्रव्यमजीजनत् ॥ ३३ ॥
तत्रत्यान्यन्यवस्तूनि लात्वा गमनतत्पराः । जाता यदा स्मृतं राज्ञः सम्मान्यं वचनं तदा ॥ ३४ ॥

किंवदन्त्या श्रुतो यत्ते राजपुत्रोऽतिरूपभाक् । अत्रन्योऽस्तीति दातव्या तदस्मै गुणसुन्दरी ॥ ३५ ॥
वितर्क्येति विचारं ते ययू राजसभान्तरम् । ददुः पिङ्गलरायाय स्वस्वामिशुभपुत्रिकाम् ॥ ३६ ॥
शुल्कादिकं विमुच्याथ राज्ञासत्कारिता अति । ततस्ते हर्षिता सन्तश्चेलु स्वनगरं प्रति ॥ ३७ ॥
ब्रह्मपुरनरेन्द्रस्य पुरः पप्रथिरे गुणान् । तस्य पिङ्गलरायस्य यथा श्रुत्वा जहर्ष सः ॥ ३८ ॥
विवाहार्हां स दृष्ट्वा तां प्रेषयामास याञ्जनान् । कुमाराकरणाय स्वान् प्राप्ताऽयोध्यापुरी च तैः ॥ ३९ ॥
प्रोचुरनन्तवीर्यन्ते विवाहसमयोऽधुना । प्रेषयतु भावान् पुत्रं तदर्थं वयमागताः ॥ ४० ॥
श्रुत्वेत्युद्विग्नचित्तःसन् ययावन्तःपुरं नृपः । राज्ञी प्रधानयोरग्रे पृष्टवान् क्रियते किमु ॥ ४१ ॥
पंगुर्नो वर्तते पुत्रः प्रेष्यते स कथं बहिः । कन्यां प्रदास्यते कोवा पङ्गवे गुणशालिनीम् ॥ ४२ ॥
मन्त्रयित्वा बभाणाथ मन्त्री बुद्धिविशारदः । आहूय सेवकाँस्तान्न कुमारो वर्ततेऽत्र भोः ! ॥ ४३ ॥
योजनद्विशते दूरे मातुलस्य गृहेऽस्ति सः । मोहिनी (मुहनी) पत्तने तस्मान्नेदानी तद्भविष्यति ॥ ४४ ॥
पश्चाद्विज्ञापयिष्यामो विवाहसमयं वयम् । श्रुत्वेति जगदुर्हे हो ! स्वामिन् ! दूरेऽस्ति तत्पुरम् ॥ ४५ ॥
लग्नं निर्धार्य दातव्यमागन्तव्यं तथा स्वयम् । सेवकानां वचः श्रुत्वा लग्न निर्धारितं तदा ॥ ४६ ॥
मासषोडशकान्तरं लग्नं लात्वा गतास्ततः । सेवका मलयं वृत्तं नृपं सर्वमचीकथन् ॥ ४७ ॥
पश्चादनन्तवीर्योऽपि चिन्तातुरो व्यचारयत् । उपायः कोऽत्र कर्त्तव्यः कालस्य त्वरिता गतिः ॥ ४८ ॥

मन्त्री नृपस्तथा राज्ञी सचिन्ता नैव लेभिरे। उपायान् यावता तावन् मुनिपञ्चशतीयुतः ॥ ४९ ॥
चतुर्ज्ञानधरो नाम्नाऽऽजगाम गाङ्गिलोमुनिः । शुद्धे वने स्थितश्चास्य नगरस्य महामनाः ॥ ५० ॥
वनपालमुखाच्छ्रुत्वा हयतिहृष्टो नृपोऽजनि। तुष्टिदानं ततो दत्त्वा हस्त्यश्वरथपत्ति युक् ॥ ५१ ॥
महामहोत्सवेनैव मुनिपार्श्वमियाय सः। वन्दनं मुनये दत्वा यथास्थाने स तस्थिवान् [चतुर्भिःक] ॥ ५२ ॥
सभ्यानामुपकाराय परोपकृतिकर्मठः । मुनिर्मधुरया वाचा प्रारेभे धर्मदेशनाम् ॥ ५३ ॥
चातुर्गतिकसंसारे मानुष्यमतिदुर्लभम् । चिन्तारत्नमिव प्राप्य मूढैर्हा ! हार्यते मुधा ॥ ५४ ॥
देवता विषयासक्ता नारका दुःखविह्वलाः । ज्ञानहीनाश्च तिर्यञ्चो धर्मयोग्या हि मानवाः ॥ ५५ ॥
यस्मिन्नस्ति दयावास इन्द्रियदमनं तथा। सत्यवाग् विधते तस्मिन् धर्मभावोऽस्ति शाश्वतः ॥ ५६ ॥
दया धर्मजनन्यस्ति दयाधर्मस्य पालिकाः । पुण्यवृद्धिकरी लोके दयैकान्तसुखप्रदा ॥ ५७ ॥
धर्मस्य जननीं हत्वा दयां यो धर्ममिच्छति । स मूर्खस्तु विना बीज सस्यभावं समीहते ॥ ५८ ॥
श्री धर्मस्य दयामूलं रक्षितं सञ्चितं तथा । वर्द्धितं सुखछायाकृत् तथा मोक्षफलप्रदम् ॥ ५९ ॥
यस्यचित्तं दयाशून्यं प्रस्तरं तत्तु प्रोच्यते । नाशाय धर्मरत्नस्य सदैव तस्य तत्परम् ॥ ६० ॥
दयाहीना न शोभन्ते राज्यश्चन्द विनायथा । घोरान्धकारभग्नास्ते दुःखिनःस्युः पदे पदे ॥ ६१ ॥
दयां कुर्वन्ति ये लोकाः प्राप्नुवन्ति सुखानि ते। कुष्टादिरोगमुक्ताःस्युर्नरा हिंसाप्रभावतः ॥ ६२ ॥

हिंसावृक्षस्य पुष्पाणि रोगास्यस् तनुदाहकाः । चिन्ताच्छाया भवेत्तस्य फलन्तु श्वभ्रयातना ॥ ६३ ॥
विविधान् विषयाँस्त्यक्त्वेन्द्रियाणां दमनं कुरु । दमितै श्चेन्द्रियैः किं भो न प्राप्तं त्वयका भुवि ॥ ६४ ॥
विषये च विषे भेदो यकारेण महान् कृतः । आद्याद्भवे भवे मृत्युः परस्माज्जायते नवा ॥ ६५ ॥
विषयासक्तचित्तैस्तु नरैर्यल्लभ्यते सुखम् । तदनन्तगुणं दुःखं प्राप्यते विषयैर्हि तैः ॥ ६६ ॥
धर्मामृतरसं त्यक्त्वा मुढा विषयजं रसम् । विषं पिबन्ति ये लोके तेषां मृत्युः पदे पदे ॥ ६७ ॥
पाथोभिः सरितांस्याच्चेत् तृप्तिभाक् सागरस्तदा । विषयैः प्राणिनस्तृप्ता भवेयुर्नात्र संशयः ॥ ६८ ॥
अनन्तजन्मजैर्भोगैर्नायं तृप्तो भवेज्जनः । किमेक जन्मजैर्भोगैरयं तृप्तिं गमिष्यति ॥ ६९ ॥
विषयार्थं विमुढात्मा खिद्यतेऽत्र मुहुर्मुहुः । परत्र लभते दुःखं यत्तदन्तो न विद्यते ॥ ७० ॥
विषयामिषलुब्धानां यातनाः स्युरनेकशः । छेदनं भेदनं श्वभ्रे पचनं मरणं तथा ॥ ७१ ॥
त्यजन्तु विषयाँल्लोका ! मुक्तिमार्गान्तरायकान् । यदीप्सा मोक्षसौख्यस्य वर्त्तते हृदयेषु वः ॥ ७२ ॥
ये याता यान्ति यास्यन्ति श्रीमती पञ्चमीं गतिम् । ते सर्वे विषयाँस्त्यक्त्वा भोगिनोऽधोगतिं गताः । ७३ ॥
सत्यं वाच्यं वचो नित्यं शुभा येन गतिर्भवेत् । असत्यवादिनो यान्ति वसुचक्रारकीं गतिम् ॥ ७४ ॥
सर्वपापाद् महत्पापं भवत्यसत्यवादिनाम् । यतोऽन्यपापादल्पः स्यान्नाशोऽसत्याद्विशेषतः ॥ ७५ ॥
स्वर्गं लभेत मोक्षं वा सत्यवाचः प्रभावतः । कालिकाचार्यवल्लोकः सत्ये सर्वं प्रतिष्ठितम् ॥ ७६ ॥

सत्यमेव परमं तत्त्वं सत्यं सौख्यकरं नृणाम् । जिह्वाया भूषणं सत्यं तस्मान् सत्ये मनःकुरु ॥ ७७ ॥
पूर्वोक्तधर्मकृत्यानि कर्तव्यानि मर्त्यै तनैः । इह लौकिककार्याणि कुर्वन्ति रासभा अपि ॥ ७८ ॥
अहो ! कष्टमहो कष्टं मोहेनान्धीकृतं जगत् । आ दीप्ते जीव लोकेऽत्र म्रियते कथमन्यथा ॥ ७९ ॥
यथात्र मन्यते बालो लालापानं पिबन् पयः । तथा दुःखमयी मह्यां दुःखं भ्रान्त्या सुखं भवेत् ॥ ८० ॥
बुध्यसे न कथं जीव ! संसारे दुःखदायके । अरघट्टघटीवात्र भ्रामितः पापकर्मभिः ॥ ८१ ॥
कथं त्वं खिद्यसे लोके दृष्ट्वान्यजन संङ्गताम् । लक्ष्मीं कुरु तदा धर्मं यदि त्वं ताः समीहसे ॥ ८२ ॥
धर्मः सर्वर्द्धिदो लोके धर्मोमुक्तिफलप्रदः । धर्म एव सखा सत्यस्तस्माद्धर्मं समाचर ! ॥ ८३ ॥
दानशीलतपो भावै श्चतुर्धा धर्म उच्यते । कर्तव्यो विधिना लोकैरात्मज्ञानसुखेच्छुभिः ॥ ८४ ॥
अभयाद्धि परं दानं न भूतं न भविष्यति । तस्मात्तदेव कृत्वा त्वं भदात्र निर्भयो भव ॥ ८५ ॥
तद्दानं द्विविधं प्रोक्तं द्रव्यभाव विभेदतः । प्राणदानाद्भवेदाद्यं ज्ञानदानात्तथेतरत् ॥ ८६ ॥
आद्यादल्पो निरोधःस्यान् मृत्योःपरात्मदैव च । ज्ञानदानेन तल्लोकान् विहीनान्मृत्युतः कुरु ॥ ८७ ॥
जन्तून् हि म्रियमाणाँस्त्वं रक्षयित्वा सुखी भव । परस्मै यो दिशेत सौख्यं तेन स्वंः क्रियते सुखी ॥ ८८ ॥
ब्रह्मचर्यं महल्लोके गीतं श्रीजिनपुङ्गवैः । यस्य प्रभावतो लेभेऽनेके मुक्तिपदं परम् ॥ ८९ ॥
शीलमेवोत्तमं वित्तं शीलं पापप्रणाशकम् । शीलं सौख्यकरं लोके शीलं दुर्गतिवारकम् ॥ ९० ॥

कर्मेन्धनं तपः कर्तुं पार्य्यते भस्मसात् क्षणात । तत्तपः कुरुतां प्राणिन् यदिप्सा मोक्षशर्मणः ॥ ९१ ॥
तपोजलेन शुध्यन्ति मलिनाःप्राणिनोऽपिहि । ज्ञातं दृढप्रहार्य्यत्र तस्मात्तेनापि शुध्यताम् ॥ ९२ ॥
भावनाभिर्भवेद्भावः सुन्दरस्तेन ता वराः क्रमशो द्वादशाग्रा भो दत्तचित्तैर्निशम्यताम् ॥ ९३ ॥
वज्रसारशरीराये ते ग्रस्ता कालरक्षसा । ये सेवार्तशरीराःस्युर्नरास्तेषां तु का कथा ॥ ९४ ॥

अथ प्रथमाऽनित्यभावना–

पयोमग्नौतुवल्लोको विषयं सेवते सदा । उत्क्षिप्तलकुटं नैव मृत्युं पश्यति मूर्खराट ॥ ९५ ॥
वर्षानदीपयःपूरतरङ्गसदृशं वपुः । वायुहतध्वजोयादृक् जीवनं चपलं तथा ॥ ९६ ॥
अब्धिकल्लोललावण्य यौवनं हस्तिकर्णवत् । क्षणिकाः सर्वसंयोगा वियोगान्तैकलक्षणाः ॥ ९७ ॥
विबुध्याऽनित्यतामेवं सर्वभावेषु सर्वदा । अत्यन्तेष्टवियोगेपि नैव शोच्यं कदाचन ॥ ९८ ॥
वस्तुस्वरूपमूढात्मा नित्यत्वग्रहकारकः । घटमात्रेऽपि भग्नेऽत्र शोचति हा मुहुर्मुहुः ॥ ९९ ॥

अथ द्वितीयाऽशरणभावना–

चक्री बली हली लोके शक्रादीन्द्रगणस्तथा । सर्वे कालमुखं जग्मुर्न कश्चिच्छरणं ददौ ॥ १०० ॥
कालाग्निदग्धदेहानां मातृपितृमुखो गणः । उपाये नैव शक्तः स्यात् कालस्य गहना गतिः ॥ १०१ ॥
अहो चटकपोतानि मातृपित्रोःप्रपश्यतोः । पतितानि यथा वह्नौ दह्यन्ते शरणं विना ॥ १०२ ॥

॥ ३० ॥

सदा कालकरालाग्नौ तथैव पतिताञ्जनान् । पश्यतां मातृपितृणां दहति कालवाह्निकः ॥ १०३ ॥
मेरुर्दण्डो तथा जम्बूद्वीपं छत्र भवेद्लम् । कर्तुं यस्तीर्थनाथः स हा ! हा ! कालमुखं गतः ॥ १०४ ॥

**अथ संसार भावना–**

ध्रुवं धिक्कारयोग्योऽयं संसारो दुःखदायकः । यस्मिन्मृत्वा नरा देवा प्रयांत्येकेन्द्रियादिषु ॥ १०५ ॥
कदायं नृपतिर्भूत्वा भुङ्क्ते भोगाननेकशः । कदा रङ्को भवेद्योऽपि शटितान्नं लभेत न ॥ १०६ ॥
कदा रोगी कदा भोगी कदा योगी तथैव च । कदाचिच्छोक युक्तःस्यात् तेन मुक्तः कदा भवेद् ॥ १०७ ॥
यो नृपो वाहनैर्हीन–श्चलितुं क्षमते नहि । स एव रासभीभूयाति-भारं वहते सदा ॥ १०८ ॥
यत्र माता भवेत्पत्नी पत्नी माता तथैव च । पुत्रःपिता पिता पुत्रो धिगिदं भवनाटकं ॥ १०९ ॥
संसारनाटके जीवा नृत्यन्ति विविधैर्भवैः । वेषैस्तथा हहा रङ्गमण्डपे नर्त्तका यथा ॥ ११० ॥
पापिनः पापयोगेन पच्यन्ते नारकाग्निषु । छिद्यन्ते च विभिद्यन्ते खिद्यन्ते च पुनः पुनः ॥ १११ ॥
मायाविनोपि मृत्वात्र जायन्ते पशवो भुवि । वाह्यन्ते निर्दयैर्लोकै र्मारयित्वा पुनः पुनः ॥ ११२ ॥
सहन्ते क्षुत्पिपासादीन्यन्यकष्टान्यनेकशः । तिर्यग्योनौ गता जीवा वर्णयितुं न शक्यते ॥ ११३ ॥
मर्त्योऽप्यसंख्यकष्टानि मर्त्ययोनौ निरन्तरम् । लभतेरोगशोकादि जन्ममृत्युजरादिभिः ॥ ११४ ॥
देवा देवीवियोगेन महर्द्धिदेवदर्शनात् । प्रत्याख्यानाद्य भावाच्च क्लिश्यन्ते प्रत्यहं हहा ! ॥ ११५ ॥

अथ एकत्वभावना

यथाऽऽगतोऽत्रैकक एव जीवस्तथैकको गच्छति पारगत्यम् ।
कृतं यथाकर्म तथैककेन वै भुज्यतेऽन्यो न सहायकः स्यात् [ उप ] ॥ ११६ ॥

कटीसूत्रविहीनोऽयं यथायातस्तथैव च । गमिष्यति न संदेहो मोहं मुञ्चसि किं नहि ॥ ११७ ॥
यथैकस्योदरे रोगो भवेदत्यन्त दारूणः । भुङ्क्ते स एव दायादो न कोपि रोगिणां भवेत् ॥ ११८ ॥
यदर्थं क्लेशकष्टान्यवमन्य द्रव्यमर्ज्यते । मृते न तत्कुटुम्बं तत् नरकादौ सहायकृत् ॥ ११९ ॥
मत्वेति स्वकुटुम्बं तच्छरीरं क्षणिकं तथा । सर्वमन्यद्भवेज्जीवात् सहायं धर्ममर्जय ॥ १२० ॥

अथ अन्यत्वभावना—

अथ कायमपि त्यक्त्वा गच्छत्यन्यं भवं भवी । तदन्यवस्तुजातस्य कः सम्बन्धो विचार्यताम् ? ॥ १२१ ॥
तस्माद् गेहादिक त्यक्त्वा धर्ममेकं समाचर । स एव दुःखनाशाय स्येह परभवे मतः ॥ १२२ ॥
सर्वस्माद्विषयादन्यो यथाऽयं विषया इमे । अस्मादन्ये तथा भाव्यं समचित्तःसुखीभव ॥ १२३ ॥
एवमन्यत्वभावेन वासितान्तःकदापि ना । लेशमात्रमपि शोकं लभन्ते सत्त्वराशयः ॥ १२४ ॥

अथाशुचिभावना

यथा विष्ठागताः लोके पदार्था शुभतोऽशुभाः । तथा कायङ्गता मन्येऽतः कायमशुचेर्गृहम् ॥१२५॥

वभ्रमुर्यत्र लोकानां कमले भ्रमरा इव । नेत्राणि चर्मणा हीनं तच्छरीरं घृणास्पदम् ॥ १२६ ॥
भवत्यतोनुमीयेत चर्मणा छादिता हीयं । अशुची रक्षिता मुढवञ्चनायैव वेधसा [युग्मं.]॥ १२७ ॥
एकैकरोमकूपोपि संख्यरोगैश्च पूरितः । ते सर्वे प्रकटाः स्युश्चेत् तदाऽशुच्याऽऽगतं भवेत् ॥ १२८ ॥
सुगन्ध युक्तवस्तूनां निष्ठा विष्ठास्ति यत्र भोः ? । कथं शुचिशरीरं तन्मन्यन्ते मुढबुद्धयः ॥ १२९ ॥
चन्दनादिरसो यस्य संसर्गान्मलसाद्भवेत् । तस्मिन्नशुचिके काये रज्यन्ते मूढमानसाः ॥ १३० ॥
सहस्र कुम्भैःकृत शुद्धयोपि नान्तःपवित्राःपुरुषा भवन्ति । तज्ज्ञस्तनौ मोहमपि प्रवृत्ति त्यक्त्वानिवृत्ति भजते सुखार्थी ॥ १३१ ॥

### अथाश्रवभावना

मनोवचनकायाश्च योगाः कर्म शुभाशुभम् । जीवानामश्रवन्त्येते तेनोक्ता आश्रवा जिनैः ॥ १३२ ॥
मैत्रीभावेन सत्त्वेषु प्रमोदेन गुणाकरे । माध्यस्थ्येन विरुद्धे च क्लिष्टे कृपापरत्वतः ॥ १३३ ॥
वामितान्तनराःपुण्यं विविधंमर्जयन्ति ये । अनुबन्धं शुभं नित्यं प्राप्नुवन्ति सदैव ते [युग्मं]॥ १३४ ॥
अशुभध्यान मिथ्यात्वकषायै विषयैस्तथा । द्व्यशीतिविधपापं ये बध्नन्ति दुःखिनस्तु ते ॥ १३५ ॥
सर्वज्ञगुरुसंघादिगणस्य स्तवने रतः । ब्रूते हितं वचो नित्यं चिनुते शुभकर्म सः ॥ १३६ ॥
सर्वज्ञोक्तविरुद्धो य उन्मार्गस्य प्रकाशकः। मार्गस्य नाशको लोके पुष्णात्यशुभकर्म सः ॥ १३७ ॥

स योऽस्ति रासभो लोके शुद्धशैलीविनाशकः । घोरनारकतां प्राप्तश्चानन्तं दुःखमश्नुते ॥ १३८ ॥
देवार्चनपरा लोका गुरोर्नत्यां परायणाः । जीवरक्षाकरा नित्यं पुष्णन्ति शुभकर्म ते ॥ १३९ ॥
य इमां भावनां नित्यं स्थिरी कुर्यात् स्वचेतसि । स तु शुभांगतिं प्राप्य ध्रुवं मुक्तिपदं व्रजेत् ॥ १४० ॥

**अथसवरभावना**

संवरः स्याद् द्विधा लोके देशत ! सर्वतस्तथा । आश्रवाणां निरोधैकलक्षणः संवरो मतः ॥ १४१ ॥
सर्वसंवरकर्ता स्यादयोगी केवली सदा । तदन्येषां सुदृष्टीनां संवरो देशतो भवेत् ॥ १४२ ॥
मिथ्यात्वाव्रतमुख्याणामाश्रवाणां प्रयत्नतः । निरोधाय च कर्त्तव्या उपायास्तद्विरोधिनः ॥ १४३ ॥
इमां यो भावनां चित्ते स्मरत्यहर्निशं नरः । स स्वर्गफलमासाद्य झटिति मोक्षगो भवेत् ॥ १४४ ॥

**अथ निर्जरा भावना**

भव भ्रमणकारिण्या अभावः कर्मसन्ततेः । निर्जरा कथ्यते लोके सकामाऽकाममेदतः ॥ १४५॥
व्रतस्थेषु सकामास्यादकामा शेषजन्तुषु । कर्मणामाभ्रवत्पाकः स्वतः स्यादन्यतः क्वचित् ॥ १४६ ॥
छेदाद्भेदान्लभेरन् यत्कष्टमेकेन्द्रियादयः । तस्माद्यत्कर्मणां शाटः साऽकामनिर्जरा मता ॥ १४७ ॥
स्ववशो ज्ञान भावेन शुभध्यान तपो-जपैः । यो भवेत्कर्मणां शाटः सा सकामोच्यते बुधैः ॥ १४८ ॥
सकामां सुखदां लोका ! विधत्त निर्जरां सदा । येन संसारदुःखेभ्यो यूयं मुक्ता भविष्यथ ॥ १४९ ॥

**अथ लोक भावना**

ऊर्ध्वतिर्यगधोभेदैं लोकस्त्रिविध उच्यते । विशेषं तत्स्वरूपन्तु विज्ञेयमन्यशास्त्रतः ॥ १५० ॥

**अथ बोधिदुर्लभभावना**

पृथिव्यादिषु षट्सु स्यादनन्तं मरणं यदा । परावर्त्तनमेकं स्यात् पुद्गलानां जिनोदितम् ॥ १५१ ॥

दुर्लभस्तदनन्तैर्हि धर्मोऽस्ति श्रीजिनोदितः । इति ज्ञात्वा प्रयोतव्या उपाया धर्ममाधका ॥ १५२ ॥

**अथ धर्मकथकोऽर्हन्निति भावना–**

लोकालोकस्वरूपज्ञाः केवलितीर्थनायकाः । यथार्थं धर्मतत्त्वं हि वक्तुं शक्ता न चापरे ॥ १५३ ॥

यतो रागविहीनास्ते ततः सत्यप्ररूपकाः । न ब्रूयुरनृतं क्वापि ततस्तद्धर्म सत्यता ॥ १५४ ॥

जिनोक्तं दशधा धर्मं क्षान्त्यादि भेदभूषितम् । ये कुर्वन्ति नरास्ते च लभन्ते सुखसंपदम् ॥ १५५ ॥

इत्यादि देशनां श्रुत्वा प्रप्रच्छ नरपुङ्गव । कर्मणा केन मे नाथ ? पुत्रः पंगुरजायत ॥ १५६ ॥

ततः प्रोवाच सूराशो गाङ्गिल ! प्राग्भवम् शृणु । अस्यास्मिन्जम्बूद्वीपेऽत्र क्षेत्र एरवते तथा ॥ १५७ ।

नाम्नाऽचलपुरं राज्ञोमयया महितो नृपः । महेन्द्रध्वजनामासीत् तयोः सामन्तसिंहकः ॥ १५८ ॥

पुत्रोऽभूत् पठनार्थं स पाठशालां निरन्तरम् । गच्छन् द्यूतकृतां सङ्गादतिद्यूनटतोऽभवत् [युग्मम्] ॥ १५९ ॥

दुष्टद्यूतेन सर्वेषु व्यसनेषु पातितस्तथा । यथाक्षिम्यः पितुर्मातुर्झटिति पतितःस तु ॥ १६० ॥

पित्रा प्रबोध्यमानोपि यदा मूढो न बुध्यते । तत्यजे स तदा दुःखान्निर्गतो नगराद्बहि ॥ १६१ ॥
अत्यजन्व्यसनं देशाटनं कुर्वन् गतः स तु । पुरे सुरपुरे रम्ये चम्पकेन विलोकितः ॥ १६२ ॥
सुन्दरामाकृतिं दृष्टवा श्रेष्ठिना तेन तस्य च । यत् कोपी कुलजो ज्ञातं दुःखितोत्रसमागतः ॥ १६३ ॥
सुकुमार शरीरत्वादन्यकार्याक्षमं हितम् । स्वगृहपार्श्वचैत्यस्यरक्षणार्थं मुमोच सः ॥ १६४ ॥
जिनाग्रढौकितं द्रव्यं प्रच्छन्नं प्राप्य राजसः । रमते द्यूतकारैः स सदा द्यूतपरायणः ॥ १६५ ॥
श्रेष्ठी तं ज्ञातवृतान्तः शिक्षयामासिवान् कदा । भो देवद्रव्यनाशेन नरकं त्वं गमिष्यसि ॥ १६६ ॥
माकार्षिदुष्टकर्मत्वमनन्तदुःखदायकम् । भववृद्धिकरं चैतत् कुम्भीपाकाग्निपाचकम् ॥ १६७ ॥
इत्यादि बोधितोपि स महामिथ्यात्वमोहितः । पापात्मा न बुबोधान्तः बुबोध बाह्यवृत्तितः ॥ १६८ ॥
एकदा भूषणानि श्रीजिनेशस्य स मूर्खराट् । गृहित्वागात् क्वचित्स्थाने सिषेवे नीचकर्म च ॥ १६९ ॥
श्रेष्ठिना चम्पकेनाथ निष्कासितो गृहाद्बहिः । जगाम स वनं किञ्चित् मृगयादि कुकर्मकृत् ॥ १७० ॥
शशादीन्प्राणिनो हत्वोदरपूर्तिं चकार सः । तत्रैक आश्रमो ह्यस्ति तापसानां मनोहरः ॥ १७१ ॥
एकदा तत्र वासिनीं मृगीं सामन्तसिंहकः । हत्वा चतुर्षु पादेषु नीचो भूमावपातयत् ॥ १७२ ॥
तापसास्तां मृगीं धर्मं बोधयन्तो विशेषतः । निन्युः शुभगतिं पश्चात्तस्मै शापं ददुःक्रुधा ॥ १७३ ॥
यथास्माकं हरिण्यारे ! पादाः छिन्नास्त्वयातथा । पङ्गुः परत्र भूयास्त्वं स्वपरार्थविनाशक ! ॥ १७४ ॥

क्रुद्धाँस्ताँस्तापसान् दृष्ट्वा नष्टः ससन्तसिंहकः । मार्गस्थेनाथ सिंहेन भक्षितो नरकं गतः ॥ १७५ ॥
च्युत्वासंख्यभवान् भ्रान्त्वा तिर्यग्-नारकरूपकान् । अकामनिर्जराभावान् मानुष्यत्वमुपार्जयत् ॥ १७६ ॥
क्षेत्रेमहाविदेहेऽथ कुसुमाख्यपुरे वरे । कीर्तिराजा गृहे दास्याः शिवायाः स सुतोऽजनि ॥ १७७ ॥
राजानं सेवमानोऽथ वज्रनामा स दासभूः । तारुण्यं प्राप लावण्याद् योषितां चित्तहारकम् ॥ १७८ ॥
प्राक्कृतकर्मदोषेण कुष्ठरोगो ऽभवत्ततो । तस्य पादौ गलित्वैव पतितौ दुःखितोऽजनि ॥ १७९ ॥
मृत्युकोटिं समापन्नं शिवा श्रावयतीह तम् । नमस्काराख्यमंत्रं स श्रुत्वा तं व्यन्तरोऽजनि ॥ १८० ॥
ततश्च्युत्वात्र भरतक्षेत्रे सौहार्द-नामके । पुरे स सुदामस्य वसन्ततिलकोदरे ॥ १८१ ॥
आयातोनवमासेषु जातेषु जातवान् सुतः । नाम्ना स्वयप्रभो जज्ञे विवेकिनां शिरोमणिः (युग्मम्)॥ १८२ ॥
परं प्राक्कृतकर्मभ्यः कुष्टरोगो भवत्ततो । हस्तपादैर्विहीनःस तेन जातः स्वयंप्रभः ॥ १८३ ॥
एक एवाभवत्पुत्रः पित्रोः कष्टं ततो महत् । अनेकोपायमाकार्ष्टां पितरौ दुःखितावपि ॥ १८४ ॥
अष्टवर्षाणि यावन्न तस्य रोगो ननाश सः । तावदेको महान्सङ्घः श्रिमच्छत्रुञ्जयं प्रति ॥ १८५ ॥
चचाल तेन सङ्घेन सहैव श्रेष्ठिराट् स च । ससुतभार्याको गतवान् धर्मप्रेमपरायणः [युग्मम्] ॥ १८६ ॥
गिरिराजोपरिं गत्वा सूर्यकुण्डजलेन सः । स्नपयामासपुत्रं स्वं देवताधिष्ठितजलम् ॥ १८७ ॥
परं लग्नं शरीरे न तस्य कर्मानुभावतः । अन्ये सङ्घजनाः सर्वे स्नात्वा श्रीऋषभप्रभोः ॥ १८८ ॥

चक्रु : पूजामनेकैर्हि द्रव्यैर्नानाप्रकारतः । पश्चात्तत्पङ्गुवृत्तान्तःपृष्टः साधुसमीपके [त्रि.वि.] ॥ १८९ ॥
किं कारणं प्रभो अत्र स्पृष्टं पङ्गोस्तनौ नहि । जलं रुग्ण इति पृष्टआचष्ट मुनिपुंगवः ॥ १९० ॥
अनेन पूर्वकाले हि देवद्रव्यं विनाशितम् । तथैकस्या हरिण्या श्च छेदिता मूलतः पदः ॥ १९१ ॥
तत्कर्मास्य बहु क्षीणमवशिष्टं किञ्चिदेव हि । वर्त्तते तेन पस्पर्शं न तनावस्य तज्जलम् ॥ १९२ ॥
एतन्मुनिवचः श्रुत्वा पितामाता च पुत्रकः । त्रयो वैराग्यमापन्ना धर्मध्यानपरायणाः ॥ १९३ ॥
श्रीमन्तमृषभदेवं वन्दित्वास्वगृहं गताः । कुर्वन्त्यहर्निशं धर्मं रोगिणो भेषजं यथा ॥ १९४ ॥
अथ मृत्वा स पङ्गुस्तत्कर्मालोच्य यथाविधि । सहस्रषोडशाब्दायुर्भुक्त्वागात् प्रथमां दिवम् ॥ १९५ ॥
ततश्च्युत्वात्र हे राजन्नयं पिङ्गलरायकः । सञ्जातस्तव पुत्रोस्तीत्युवाच गाङ्गिलो मुनिः ॥ १९६ ॥
पुनरपि मुनि धर्मदेशनापूर्वकं वचः । उवाचानेन मिथ्यात्वादेतत्कर्म कृतं हहा ॥ १९७ ॥
तथाहि—:

मद्यपानाद्यथा जीवो न जानाति हिताहिते । धर्माधर्मौ न जानाति तथा मिथ्यात्वमोहितः ॥ १९८ ॥

मिथ्यात्वेनालीढचित्ता नितान्तं तत्त्वातत्त्वे जानते नैव जीवाः ।
किं जात्यन्धाःकुत्रचिद्वस्तुजाते रम्यारम्य व्यक्तिमासादयेयुः ॥ १९९ ॥

अभव्याश्रितमिथ्यात्वेऽनाद्यनन्तास्थिति भवेत् । सा भव्याश्रित मिथ्यात्वेऽनादिसान्ता पुनर्मता ॥ २०० ॥

इत्थमनेन जीवेन कर्म बद्धमनेकशः । तेन पङ्गुरयं जातः पुत्रो दुःखाकरस्तव ॥ २०१ ॥
राजा पप्रच्छ हेनाथ ! उपायः कोपी कथ्यताम् । यस्यासेवनमात्रेण पुत्ररोगात्ययो भवेत् ॥ २०२ ॥
मुनिः प्रोवाच हे राजन् ! तृतीयारकशेषके । सार्धाष्टमासत्रिवर्षे माघकृष्णत्रयोदशी ॥ २०३ ॥
अत्यन्तरमणीयासीद् यस्यां श्रीऋषभप्रभोः । निर्वाणमभवत्तेन तिथिः कल्याणकारिणी ॥ २०४ ॥
तस्यां चतुर्विधाहारपरित्यागं विधाय भोः । उपवासो हि कर्त्तव्यः कर्मरोगविनाशकः ॥ २०५ ॥
ढौकनीयश्च रत्नस्य जिनाग्रे मेरुपञ्चकम् । मध्य एको महान्मेरुश्चत्वारो लघवो दिशि ॥ २०६ ॥
चतुर्दिक्षु तथा नन्द्यावर्ताः कार्याःप्रयत्नेतः । तावन्त एव यावन्तो मेरवो लघवःकृताः ॥ २०७ ॥
धूपदीपादिभिर्द्रव्यैः पूजाकार्याजिनेशितुः । मासाँस्त्रयोदश यावत्तावद्वर्षं तथैव वा ॥ २०८ ॥

॥ ॐ ह्रीं श्रीं ऋषभदेवपारङ्गताय नमः ॥ (मंत्र)

पारङ्गताय देवाय नाभेयाय नमो नमः । सहस्रद्वयवारश्च जपनीयमिदं मुदा ॥ २०९ ॥
प्रतिमासं प्रकुर्वन् सन्नेवं धर्मपरायणः । रोगहीनो भवेज्जीवः परत्रापि सुखी भवेत् ॥ २१० ॥
पौषधस्थैस्त्रयोदश्यां विधिः कर्तुं न पार्यते । पारणकदिने कार्यस्तस्याविधिः समग्रतः २११ ॥
अतिथिसंविभागश्चकृत्वा भुञ्जीत मानवः । इत्थं गुरुवचः श्रुत्वा व्रतं लात्वा गृहं गतः ॥ २१२ ॥
सपुत्रोनन्तवीर्यस्य सकलत्रोऽभवत्सुखी । धर्मध्यानप्रभावेण धर्मः कल्पद्रुम खलु ॥ २१३ ॥

माघकृष्णत्रयोदश्यां प्रथमं कृतवान् व्रतम् । द्विचरणाङ्कुरो जातौ पिङ्गलस्य तदा तनौ ॥ २१४ ॥
यावत्त्रयोदशमासाँस्तपस्तस्य प्रकुर्वतः । सुन्दरं प्रकटीभूतं पाणिपादं तु तत्तनौ ॥ २१५ ॥
अथ पिङ्गलकोहृष्टो विशेषं धर्ममातनोत् । प्राप्ते षोडशके मासेऽवृणोत्तां गुणसुन्दरीम् ॥ २१६ ॥
बहुवीनां राजकन्यानां प्राणिग्रहणकर्म सः । अन्यासामपि चक्रेऽथ विरक्तोऽनन्तवीर्यकः ॥ २१७ ॥
राज्यं पिङ्गलरायाय दत्वा चारित्रमग्रहीत् । गाङ्गिलाख्यमुनेः पार्श्वेऽतीतदोषमपालयत् ॥ २१८ ॥
शत्रुञ्जये महातीर्थेऽनशनं स मुदा ऽकरोत् । कालं कृत्वा मुनीन्द्रोऽथ प्राप श्रीमच्छिवालयम् ॥ २१९ ॥
सन्नीत्यापालयँल्लोकान् यावद्वर्षत्रयोदशम् । मेरुत्रयोदशीं नित्यमाराध्य महीपतिः ॥ २२० ॥
पश्चादुद्यापनं कृत्वा त्रयोदशाऽकारयत् । मन्दिराणि जिनेशानां तावतीः प्रतिमास्तथा ॥ २२१ ॥
स्वर्णमयीस्तथारूप्यमयीः प्रेम्णा चकार सः । रत्नमयीस्तथ रत्नैस्त्रयोदशविधैर्मुदा ॥ २२२ ॥
मेरुपञ्चकमातत्य ढौकितं प्रतिमंदिरम् । साधर्मिकाणां वात्सल्यं त्रयोदश चकार सः ॥ २२३ ॥
महताडम्बरेणैव ससंघोगात् त्रयोदश । वारं श्रीतीर्थयात्रायै ज्ञानभक्तिं तथा व्यधात् (युग्मम्) ॥ २२४ ॥
ततःक्रियन्ति पूर्वाणि,स्वं राज्यं च तथा व्रतम् । प्रपाल्य स्वकुमाराय राज्यं दत्वा विरक्तवान् ॥ २२५ ॥
श्रीमुनिसुव्रताचार्य-पार्श्वे दीक्षां स पिङ्गलः । जग्राह बहुभिः पुम्भिः द्वादशाङ्गीमधीत्य च ॥ २२६ ॥
स चतुर्दशपूर्वज्ञः सञ्जातःशुद्धमानसः । आचार्यपदवीं प्राप्य शुक्लध्यानं प्रचक्रमे ॥२२७ ॥

द्वादशेघातिकर्माणि क्षपयित्वा महामुनिः । त्रयोदशे गुणस्थाने कैवल्यं प्राप निर्मलम् (युग्मम्)॥ २२८ ॥
देवैः स्वर्णमयं पद्मं रचितं चित्तहारकम् । तत्रोपविश्य सूरीशः केवली देशनां ददौ ॥ २२९ ॥
हा लोकाः द्वेषरागाभ्यां क्लेशप्रेमपरायणा । यद्यदत्र विचेष्टन्ते तद्वक्तुं नैव पार्यते ॥ २३० ॥
अनन्तं प्राप्नुवन्त्यत्र दुःखं यन्नरकोद्भवाः । तदाभ्यां कृतमेवास्ति मत्वेत्येनौ परित्यज १ ॥ २३१ ॥
सहस्र लक्षकोट्यादिर्म्रियते युद्धकर्मणि । सुभटानां गणस्ताभ्यां जीव ! तत्तौ परित्यज ॥ २३२ ॥
गर्भजानां नवैकेन लक्षं भोगेन नाश्यते । संख्यातीतान्यजातीनामत्ररागोऽपराध्यति ॥ २३३ ॥
रागाधीनमनुष्याणां सुखादुःखमनन्तकम् । यथासिपत्र-धाराग्रस्थितमधुलिहां भवेत् ॥ २३४ ॥
द्वेषो हा हृदयेष्टानामपि योगविनाशकः । ज्ञानदर्शन चारित्रवृक्षमूलंकपो मत ॥ २३५ ॥
द्वेषात् स्वकानपि पुत्रान् नाशयन्त्यत्र मातरः । पच्यन्ते नरके हा ताः कुम्भीपाके मुहुर्मुहुः ॥ २३६ ॥
यद्यत् कार्यं भवेदत्र परमार्थ पराङ्मुखं । तत्तताभ्यां विजानीया अनन्तदुःखदायकम् ॥ २३७ ॥
इत्यादि देशनां दत्त्वा विजहारान्यतो मुनिः । अनेकान् प्रतिसंबोध्य मुक्तिमार्गं प्रदत्तवान् ॥ २३८ ॥
लक्षद्वामप्तनिपूर्वायुष्कः स केवली प्रभुः । चतुर्दशे गुणस्थाने चटितोथ सुखावहे ॥ २३९ ॥
ह्रस्व पञ्चाक्षरोच्चार कालमाने निरुध्य सः । योगॉश्चाघातिकर्माणि क्षपयित्वा महामुनिः ॥ २४० ॥
शरीर बन्धनं त्यक्त्वैके नैव समयेन च । जगामानन्ददं स्थानं जरा मृत्युविवर्जितम् ॥ २४१ ॥

एवं मेरुत्रयोदश्या महिमातिप्रवृत्तवान् । श्रीमत्पिंगलरायाख्यान्नृपाद्राज्ञां शिरोमणेः ॥ २४२ ॥
पूर्वे रत्नमयाः पश्चात्स्वर्णरूपास्ततो भवन् । राजता अधुना सन्ति मेरवो घृतनिर्मिताः ॥ २४३ ॥
एवं मेरुत्रयोदश्या महिमानं विचार्य भोः । लोका ! आराधयतैनां येन स्यात् सुखसंततिः ॥ २४४ ॥

( प्रशस्तिः )

संविद्वृद्धिकरस्तमः पटहरः कल्याणसस्यप्रदो । दुष्टाचारनिवारको रविरिव प्राकाशयद्योभुवम् ॥
आकाशं तपगच्छरूपमनघं चानन्दसूरीश्वरोऽधिष्ठायैव बभौ महाविजयवान् हार्दं तमो हन्तु नः ॥२४५॥शा.
तस्य पट्ट धरो धीरो विजयात् कमलः पर । सूरीशः सूर्यवन्नित्यं तपागच्छप्रकाशकः ॥ २४६ ॥
ईडरगिरिशीर्षस्थो द्विपञ्चाशज्जिनालयः । उद्धारितो वचोलब्ध्या स्थित्वा मासचतुष्टयीम् ॥ २४७ ॥
अनेकराजपुत्राश्च निरूद्धा मांसभक्षणात् । येनकृपालुनारुद्धाः सन्ति पाखण्डिनो जनाः ॥ २४८ ॥
प्रतिस्थलं गुणान् यस्य गायन्ति मुनिपुङ्गवाः । तद्शिष्येण सल्लब्धिविजयेनेडरे पुरे ॥ २४९ ॥
कर्णमुनिनिधिन्दौ च विक्रमीये शुभे तथा । मासे भाद्रपदे शुक्लदशम्यां शनिवासरे ॥ २५० ॥
श्रीमानविजयानां हि मया प्रेरणया कृतम् । गतं पूर्त्तिपथञ्चैतत् पुस्तकं सुगमं परम् ॥ २५१ ॥
श्रीमानविजयैराद्या लिपिरस्य कृता वरा । ज्ञान ध्यान तपोनिष्टैः परोपकृतिकर्मठैः ॥ २५२ ॥

(समाप्त)